# दशकुमारचरितम् ।

महामहोपाध्याय श्रीमद्दण्डि पण्डित विरचितम्



गवर्णमेण्टसंस्कृतविद्यालयसाहित्याध्यापक

श्रीमदनमोहनतर्कालङ्कारैः

## संस्कृतम्

संस्कृत यन्त्रे मुद्रितम्

कलिकातायाम्

संवत् १९०६ ।

1849

# दशकुमारचरितम्।

## प्रथम उच्छ्वासः।

### अनुक्रमणिका

श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकसिताक्षी सस्मितमिदमभाषत दयित त्वत्प्रसादादद्य मे चरितार्था श्रोत्रवृत्तिः अद्य मे मनसि तमोपहस्त्वया दत्तो ज्ञानप्रदीपः पक्वमिदानीं त्वत्पादपद्मपरिचर्य्याफलम् अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम् अभवदीयं हि नैव किञ्चिन्मत्सम्बद्धम् अथवा अस्त्येवास्यापि जनस्य क्वचित् प्रभुत्वम् अशक्यं हि मदिच्छया विना सरस्वतीमुखग्रहणोच्छेषणीकृतौ दशनच्छदरुच चुम्बयितुम् अम्बुजासनास्तनतटोपभुक्तमुरःस्थलञ्चैतदालिङ्गयितुम्। इति प्रियोरसि प्रावृडिव नभस्युपास्तीर्णगुरुपयोधरमण्डला प्रौढकन्दलीमुकुलमिव रूढरागरूषितं चक्षुरुल्लासयन्ती बर्हिबर्हावलीविडम्बिना कुसुमचन्द्रकशारेण मधुकरकुलव्याकुलेन केशकलापेन स्फुरदरुणकिरणकेसरकरालं कदम्बमुकुलमिव कान्तस्याधरमणिमधीरमाचुचुम्ब। तदारम्भस्फुरितया च रागवृत्त्या भूयोऽप्यावर्त्तितातिमात्रचित्रोपचारशीकरो रतिप्रबन्धः।

सुरतखेदसुप्तयोस्तु तयोः स्वप्ने बिसगुणनिगडितपादो जरठः कश्चिज्जालपादः प्रत्यदृश्यत प्रत्यबुध्येतां चोभौ। अथ तस्य राजकुमारस्य कमलमृदुशशिकिरणरज्जुदामनिगृहीतमिव रजतशृङ्खलोपगूढं चरणयुगलमासीत्। उपलभ्यैव च किमेतदित्यतिपरित्रासविक्लवा मुक्तकण्ठमाचक्रन्द राजकन्या। येन तत्सकलमेव कन्यान्तःपुरम् अग्निपरीतमिव पिशाचोपहतमिव वेपमानम् अनिरूप्यमाणतदात्वायतिवि-

भागम् अगण्यमानरुहस्यरक्षासमयम् अवनितलविप्रविध्यमानगात्रम् आक्रन्दविदीर्य्यमाणकण्ठम् अश्रुस्रोतोऽवगुण्ठितकपोलतलम् आकुलीबभूव। तुमुले चास्मिन् समये अनियन्त्रितप्रवेशा किं किमिति सहसोपसृत्य विविशुरन्तर्वैशिकपुरुषाः ददृशुश्च तदवस्थं राजकुमारम्। तदनुभावनिरुद्धनिग्रहेच्छास्तु सद्य एव ते तमर्थं चण्डवर्म्मणे निवेदयामासुः। सोऽपि कोपादागत्य निर्द्दहन्निव दहनगर्भया दृशा निशाम्योत्पन्नप्रत्यभिज्ञः कथं स एवैष मदनुजमरणनिमित्तभूतायाः पापायाः बालचन्द्रिकायाः पत्युरत्यभिनिविष्टचित्तदर्पस्य नैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपमत्तः कलाभिमानी नैकविधविप्रलम्भोपायपाटवावर्ज्जितमूढपौरजनाध्यारोपितवितथदेवतानुभावः कपटधर्म्मकञ्चुको निगूढपापशीलश्चपलो ब्राह्मणब्रुवः। कथमिवैनमनुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना पापेयमवन्तिसुन्दरी। पश्यतु पतिमद्यैव शूलावतंसितमियमनार्य्यशीला कुलपांसनीति निर्भर्त्सयन् भीषणभ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाम्बुजरथाङ्कलाञ्छने राजपुत्रं सरभसमाचकर्ष। स तु स्वभावधीरः सर्व्वपौरुषातिभूमिः सद्यस्तदुचितप्रतिक्रियां देवीमेव तामापन्नमवधार्य्य "स्मर तस्या हंसगामिनि हंसकथायाः सहस्व वासु मासद्वयम्" इति प्राणपरित्यागरागिणीं प्राणसमां समाश्वास्य रिपुवश्यतामयासीत्। अथ विदितवार्त्तावार्त्तौ महादेवीमालवेन्द्रौ जामातरम् आकारपक्षपातिनो कातात्यागोपन्यासेन अरिणा जिघांस्यमानं ररक्षतुः न तु शोकतुल्यमप्रभुत्वादुत्तारयितुमापदः।

स किल चण्डशीलश्चण्डवर्म्मा सर्व्वमिदमुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय सन्दिश्य सर्व्वमेव पुष्पोद्भवकुटुम्बकं सर्व्वस्वहरणपूर्व्वकं सद्य एव बन्धने क्षिप्ता कृत्वा च राजवाहनं राजकेसरिकिशोरकमिव दारुपञ्जरनिबद्धं मूर्द्धजजालजीनचूडामणि

प्रभावविच्छिन्नक्षुत्पिपासादिखेदश्च तम् अवधूतदुहितृप्रार्थनस्याङ्ग-राजस्य उद्धरणायाङ्गानभियास्यन्ननन्यविश्वासान्निनाय · रुरोध च बलभरदत्तकम्पचम्पाम्। चम्पेश्वरोऽपि सिंहवर्म्मा सिंहसाम्यविक्रमः प्राकारं भेदयित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतव्राताहूतानां साहाय्यदानायातिसत्वरमापततां धरापतीनामचिरकालभाविन्यपि सन्निधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मान् अक्षमापरीतः प्रतिबलं प्रतिजग्राह। जगृहे च महति सम्पराये प्रक्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नमर्म्मा सिंहवर्म्मा करिणः करिणमवप्लुत्य अतिमानुषप्राणबलेन चण्डवर्म्मणा। स च तद्दुहितर्य्यम्बालिकायामबलारत्नसमाख्यातायामतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत् अपि त्वनीनयदपनीताशेषशल्यमकल्यसन्धो बन्धनगृहम् अजीगमच्च [गणकसङ्घैरद्यैव क्षपावसाने विवाहनीया राजदुहितेति।

कृतकौतुकमङ्गले च तस्मिन् एकपिङ्गाचलात्प्रतिनिवृत्य यथा·जङ्घानाम जङ्घाकरिकः प्रभवतोदर्पसारस्य प्रतिसन्देशमावेदयत् "अयि मूढ किमस्ति कन्यापुरदूषकेऽपि कश्चित्कृपावसरः। स्थविरः स राजा जरावलुप्तमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किञ्चित्प्रलपति त्वयापि किं तदनुमत्या स्थातव्यम् अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रबधवार्त्ताप्रेषणेन अवगमितव्योऽस्माकं विधेयः सा च दुष्टकन्या सहानुजेन कीर्त्तिसारेण निगडितचरणा चारके निरोद्धव्येति", तच्चाकर्ण्य प्रातरेव राजभवनद्वारे स दुरात्मा कुमारीपुरदूषकः सन्निधापयितव्यः चण्डपोतश्च मातङ्गपतिरचितकल्पनोपपन्नस्तत्रैव समुपस्थापनीयः। कृतविवाहकृत्यश्चात्यायाहमेव तमनार्य्यं तस्य हस्तिनः कृत्वा क्रीडनकं तदधिरूढ एव गत्वा प्रत्यु साहाय्याय प्रत्यासीदतो राजन्यकस्य सकोशवाहनस्यावग्रहं करिष्यामि इति पार्श्वचरानन्वशात्। निन्ये चासावहन्यन्यस्मिन् उन्मि-

मध्येचोरागारे राजपुत्रो राजाङ्गनं रक्षिभिः उपतस्थे च चरित गरुडबद्धपोतः।

मुक्तो च तस्मिन् मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया। सा चैनं चन्द्रलेखाच्छविः काचिदप्सरोभूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यज्ञपयत् देव दीयतामनुग्रहार्द्रं चित्तम्। अहमस्मि सोमरश्मिसम्भवा सुरत मञ्जरी नाम सुरसुन्दरी। तस्या मे नभसि नलिनलुब्धमुग्धकल हंसानुबद्धवक्त्राया तन्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु हिमवते सरसि मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत्। पातितश्च कोपितेन कोऽपि तेन मयि शापः "पापे भजस्व लोहजातिमज्ञातचेतन्या सतीति"। स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं सन्दानतामेत्य निस्तरणीयामिमामापदम् अवरिष्टोऽभ्यनुज्ञात्वं चेन्द्रियामकल्पयत्। अनन्तरेण च पाप्मना शृङ्खलीकृतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शङ्करगिरौ समध्यगमत् आत्मसात्कृता च तेनाहमासम्। अथासौ पितृप्रयुक्ते वैरे वर्त्तमाने विद्याधरचक्रवर्त्तिनि वत्सराजवंशवर्द्धने नरवाहनदत्ते विरसाशयस्तदपकारक्षमोऽयमिति तपस्यता दर्पसारेण सह समबध्यत प्रतिश्रुतश्च तेनास्मै स्वसुरवन्तिसुन्दर्या दानम्। अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियामवन्तिसुन्दरीं दिदृक्षुरवधीन्द्रियस्तदिन्द्रमन्दिरद्युति कुमारीपुरमुपासरत्। अन्तरितश्च तिरस्करिण्या विद्यया तां तदा त्वदङ्गोपाश्रयां सुरतखेदसुप्तगात्रीं त्रिभुवनसर्गयात्रासंहारसंश्रिताभिः कथाभिरन्तस्यन्दिनीभिः प्रत्यानीयमानरागपूरां न्यरूपयत्। स तु प्रकुपितोऽपि त्वदनुभावप्रतिबद्धनिग्रहान्तराध्यवसायः समाश्लिष्टेतरेतरमत्यन्तसुखप्रसुप्तयोर्युवयोर्दैवदत्तोत्साहः पाशुलोहात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा सरोवरभसमपासरत्। अवसितश्च ममाद्य

शापः तव मासद्वयं तव पारतन्त्र्यम्। प्रसीदेदानीं किं तव करणीयमिति प्रणिपतन्तीं वार्त्तयानया मत्प्राणसमां समाश्वासयेति चादिश्य विससर्ज।

तस्मिन्नेव क्षणान्तरे चण्डवर्मा सिंहवर्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते बाहुदण्ड एव बलवदवलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्मकारिणा तस्करेणैकेनैव नखरप्रहारेण राजमन्दिरोद्देश एव प्रवसितमयमापादयन्नचकितगतिरसौ विहरतीति वाचः समभवन्। श्रुत्वा चैतत् तमेव मत्तहस्तिनमुदग्राधोरणोराजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनमभ्यवर्त्तत। तत्र रम्यतरावधूतपत्तिदत्तवर्त्मा च प्रविश्य वेश्माभ्यन्तरम् अदभ्राम्बुनिर्घोषगम्भीरेण स्वरेणाभ्यधात् “कः स महापुरुषः येनैतन्मानुषमात्रदुष्करं महत् कर्म्मानुष्ठितम् आगच्छतु मया सहेमं मत्तहस्तिनमारोहतु अभयं मदुपकण्ठवर्त्तिनो देववदानवैरपि विग्रहकामस्येति”।

निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिरानम्य संचाकुञ्चितं कुञ्जरगात्रमसक्तमध्यरुक्षत्। आरोहन्तमेवैनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः अये प्रियसखोऽयमपहारवर्म्मैवेति पश्चान्निषीदतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितम् अग्रेऽवलम्ब्य स्वमङ्कमालिङ्गयामास स्वयञ्च पृष्ठतोवलिताभ्यां भुजाभ्यां पर्य्यवेष्टयत्। तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्चापहारवर्म्मा चाप चक्र कणप कर्पण प्रास पट्टिश मुषल तोमरादिप्रहरणजातमुपयुञ्जानो बलावलिप्तान् प्रतिबलवीरान् बहुप्रकारयोधिनः परिक्षिपतः क्षितौ विचिक्षेप। क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता बलनिकायेन परिक्षिप्तम्।

अनन्तरञ्च कश्चित् कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः कटितटनिविष्टरत्नखरः पट्टनिवसनः क्षामक्षामोदरोरस्थलः कृतहस्ततया रिपु

कुशमिव बर्बरैरभिवर्धितं पादाङ्गुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन सन्निकृष्य पूर्व्वापदेशप्रत्ययादयमेव स देवो राजवाहन इति प्राञ्जलिः प्रणम्यापहारवर्म्मणि निविष्टदृष्टिराचष्ट "त्वदादिष्टेन मार्गेण सन्निपातितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजन्यकम् अरिबलञ्च विहतविध्वस्तं क्षीणञ्चाहार्य्यशस्त्रं वर्त्तते किमन्यत्कृत्यमिति," इदन्तु व्याजहारापहारवर्म्मा देव दृष्टिदानेनानुगृह्यतामयमाज्ञाकरः। सोऽयमप्यहमेवामुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः। स एवायं निर्गमय्य बन्धनादङ्गराजम् अपवर्जितञ्च कोशवाहनमेकीकृत्य अस्मद्गृह्येणामुना सह राजन्यकेन एकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु यदि न दोषइति। देवोऽपि यथा ते रोचत इति समाभाष्य गत्वा च तन्निर्दिष्टे नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचित् क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदादवततार। प्रथमसमवतीर्णेनापहारवर्म्मणा च स्वहस्तसत्वर समीकृते मातङ्गइव भागीरथीपुलिनमण्डले सुखं निषसाद।

तथा निषण्णञ्च तमुपहारवर्म्मार्थपाल प्रमति मित्रगुप्त मन्त्रगुप्त विश्रुतैर्मैथिलेन च प्रहारवर्म्मणा काशीभर्त्रा च कामपालेन चम्पेश्वरेण सिंहवर्म्मणा सहोपागत्य धनमित्रः प्रणिपपात। देवोऽपि हर्षाविद्धमभ्युत्थितः कथं समस्तएव मित्रगणः समागतः को नामायमभ्युदयइति कृतयथोचितोपचारानुत्पीड़िततरं परिरेभे काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान् पितृवदपश्यत्। तैश्च हर्षकम्पितपलितं सरभसोपगूढः परमभिननन्द। ततः प्रवृत्तासु प्रीतिसङ्कथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितमनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावः तांश्च तदुक्तावभ्ययुङ्क्त। तेषु प्रथमं प्राह स्म किलापहारवर्म्मा।

इति दशकुमारचरिते प्रथम उच्छ्वासः।

---

# द्वितीय उच्छ्वासः ।



## अपहारवर्म्मचरितम् ।

देव त्वयि तदावतीर्णे द्विजोपकारायासुरविवरं त्वदन्वेषणप्रसृते च मित्रगणे अहमपि महीमटन् अङ्गेषु गङ्गातटे बहिश्चम्पायाः कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिरिति कुतश्चित्संलपतो जनसमाजादुपलभ्य अमुतो बुभुत्सुस्त्वद्गतिं तमुद्देशमगमम् न्यग्रा-मयश्च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य छायायां कमप्युद्विग्नवर्णं तापसम् । अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः क्वासौ भगवान् मरीचिस्तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिम् आश्चर्य्यज्ञानविभवो हि स महर्षिर्मह्यं विश्रुत इत्यवादिषम् ।

अथासावुष्णमायतञ्च निश्वस्याशंसत् । आसीत्तादृशो मुनिरस्मिन्नाश्रमे । तमेकदा काममञ्जरी नामाङ्गपुर्य्यवतंसस्थानीया वारयुवतिरश्रुबिन्दुतारकितपयोधरा सनिर्वेदमभ्येत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट । तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवाविच्छिन्नपातमपतत् । स किल कृपालुस्तं जनमार्द्रया गिराश्वास्य आर्त्तिकारणं तां गणिकामपृच्छत् । सा तु सव्रीडेव सविषादेव सगौरवेव चाब्रवीत् । भगवन्नैहिकस्य सुखस्याभाजनं जनोऽयम् आमुष्मिकाय श्वोवसीयाय आर्त्ताभ्युपपत्तिवित्तयोर्भगवत्पादयोर्मूलं शरणमभिप्रपन्न इति । तस्यास्तु जननी उदञ्जलिः पलितधारशिखण्डबन्धस्पृष्टमुक्तभूमिरभाषत । भगवन्नस्या मे दोषमेषा वो दासी विज्ञापयति दोषश्च मम नाधिकारानुष्ठापनम् ।

एष हि गणिकामातुरधिकारः दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया, तेजोबलवर्णमेधासंवर्धनेन दोषाग्निधातुसाम्यकृता मितेनाहारेण

शरीरपोषणम्, आपञ्चमाद्वर्षात्पितुरप्यनतिदर्शनम्, जन्मदिने पुण्यदिनेषु च उत्सवोत्तरो मङ्गलविधिः, अध्यापनमनङ्गविद्यानां साङ्गानाम्, नृत्यगीतवाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशलादिषु च सम्यग्विनयनम्, शब्दहेतुसमयविद्यासु वार्त्तामात्रावबोधनम्, आजीवज्ञाने क्रीडाकौशले सजीवनिर्जीवासु च द्यूतकलास्वभ्यन्तरीकरणम्, अभ्यन्तरकलासु वैश्वासिकजनात्प्रयत्नेन प्रयोगग्रहणम्, यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिबर्हायाः प्रकाशनम्, प्रसङ्गवत्यां सङ्गीतादिक्रियायां पूर्व्वसंगृहीतैर्ग्राह्यवाग्भिः सिद्धिलम्भनम्, दिक्षु खेषु तत्तच्छिल्पवित्तकैर्यशःप्रख्यापनम्, कार्त्तान्तिकादिभिः कल्याणलक्षणोद्घोषणम्, पीठमर्दविटविदूषकैर्भिक्षुक्यादिभिश्च नागरिकपुरुषसमवायेषु रूपशीलशिल्पसौन्दर्य्यमाधुर्य्यप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्थापनम्, स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोऽर्थशक्तिशौचत्यागदाक्षिण्यशिल्पशीलमाधुर्य्योपपन्नाय स्वतन्त्राय प्रदानम्, अधिकगुणायास्वतन्त्राय प्राज्ञतमायाल्पेनापि बहुव्यपदेशेनार्पणम्, अस्वतन्त्रेण वा गान्धर्व्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभेऽर्थस्य कामसंवीकृते स्वामिन्यधिकरणे वा साधनम्, रक्ततरस्य दुहितैकचारिणीव्रतानुष्ठापनम्, नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैरुपायैरपहरणम्, अददता लुब्धप्रायेण च विगृह्यासनम्, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणस्त्यागशक्तिसन्धुक्षणम्, असारस्य वाक्सन्तक्षणैर्लोकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्याभियोगैरवमाननैश्चापवाहनम्, अर्थदैरनर्थप्रतिघातिभिश्चानिन्द्यैरन्यैरनुबद्धार्थानर्थसंशयान्विचार्य्य भूयः संयोजनमिति।

गणिकायाश्च गम्यं प्रति सत्यतैव न सङ्गः सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः। एवं स्थिते भगवता प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्रधने विप्रयूनि स्नेहेन

धनक्षयेन रममाणया मासमात्रमत्यवाहि । गम्यजनश्च भूयानर्थ-
योग्यः प्रत्याचक्षमाणयाऽनया प्रकोपितः स्वकुटुम्बकमवसादितम् ।
एषा कुमति र्न कल्याणीति निवारयन्त्यां मयि वनवासाय कोपात्
प्रस्थिता । सा चेदियमत्यर्थनिश्चया सर्व्वएव जनोऽस्यैवानन्यगति
रनशनेन संस्थास्यत इत्यरोदीत् ।

अथ सा वारयुवतिस्तेन तापसेन भद्रे ननु दुःखाकरोऽयं वन
वासः तस्य फलमपवर्गः स्वर्गो वा प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः
प्रायो दुःसम्पादएव द्वितीयस्तु सर्व्वस्यैव सुलभः कुलधर्म्मानुष्ठायिनः
तदशक्यारम्भादुपरम्य मातुर्मते वर्त्तस्वेति सानुकम्पमभिहिता
यदीह भगवत्पादमूलं न शरणं शरणमस्तु मम कृपणाया हिरण्य
रेता देवएवेत्युदमनायत । स तु मुनिरनुविमृश्य गणिकामातरमव-
दत् सम्प्रति गच्छ रक्षन् प्रतीक्षस्व कानिचिद्दिनानि यावदियं
सुकुमारा सुखोपभोगसमुचिता सत्यरण्यवासव्यसनेनोद्वेजिता भूयो
भूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यतीति । तथेति तस्याः
प्रतियाते स्वजने सा गणिका तत्र विमलघुभक्तिर्धौतोद्गमनीयवासिनी
नात्यादृतशरीरसंस्कारा वनतरुपोतकालवालपूरणैर्देवतार्चनकुसु-
मोच्चयावचयप्रयासैर्नैकविकल्पोपहारकर्म्मभिः कामशासनार्चे च
गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्ग
सम्बन्धिनीभिः कथाभिरध्यात्मवादैश्चानुरूपैरल्पीयसैव कालेनान्व-
रञ्जयत् ।

एकदा च रहसि रक्तं तमुपलक्ष्य मूढः खलु लोको यत्सह धर्म्मे-
णार्थकामावपि गणयतीति किञ्चिदकथयत । कथय वा तु केनांशेनार्थं
कामातिशायी धर्म्मस्तवाभिप्रेतइति प्रेरिता मरीचिना लज्जामन्थर
मारभताभिधातुम् । इतः किल जनाद्भगवतस्त्रिवर्गबलाबलज्ञानम् ।
अथवैतदपि प्रकारान्तरं दासजनानुग्रहस्य । भवतु श्रूयताम् । ननु
धर्म्मादृतेऽर्थकामयोरनुत्पत्तिरेव तदनपेक्षएव स धर्म्मो निर्वृत्तिसुख

प्रसूतिहेतुरात्मनः समाधानमात्रसाध्यश्च सोऽयमर्थकामवद्बाह्यसाधनेषु नात्यायतते। तत्त्वदर्शनोपबृंहितश्च यथाकथञ्चिदप्यनुष्ठीयमानाभ्यां नार्थकामाभ्यां बाध्यते बाधितोऽपि चाल्पायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य श्रेयसेऽप्यनल्पाय कल्पते। तथाहि पितामहस्य तिलोत्तमाभिलाषः भवानीपतेर्मुनिपत्नीसहस्रसन्दूषणं पद्मनाभस्य षोडशसहस्रान्तःपुरविहारः प्रजापतेः स्वदुहितर्य्यपि प्रणयप्रवृत्तिः शचीपतेरहल्याजारता शशाङ्कस्य गुरुतल्पगमनम् अंशुमालिनो वडवालङ्घनम् अनिलस्य केसरिकलत्रसमागमः बृहस्पतेरुतथ्यस्य भार्य्याभिसरणं पराशरस्य दासकन्यादूषणं पाराशर्य्यस्य भ्रातृदारसङ्गतिः अत्रेर्मृगीसमागमइति। अमराणाञ्च तेषु तेषु कार्य्येषु आसुरविप्रलम्भनानि ज्ञानबलान्न धर्म्मपीडामावहन्ति। धर्म्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते तन्मन्ये नार्थकामौ धर्म्मस्य शततमीमपि कलां स्पृशतइति।

श्रुत्वैतदृषिरुदीर्णरागवृत्तिरभ्यधात् अयि विलासिनि साधु पश्यसि न धर्म्मस्तत्त्वदर्शिनां विषयोपभोगेनोपरुध्यतइति। किन्तु जन्मनः प्रभृति अर्थकामवार्त्तानभिज्ञा वयं ज्ञेयौ चेमौ किंरूपौ किंपरिवारौ किंफलौ चेति। सात्ववादीत् अर्थस्तावदर्ज्जनवर्द्धनरक्षणात्मकः कृषिपाशुपाल्यवाणिज्यसन्धिविग्रहादिपरिवारस्तीर्थप्रतिपादनफलश्च। कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः। परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलञ्च। फलं पुनः परमाह्लादनं परस्परविमर्द्दजन्म स्मर्य्यमाणमधुरमुदीरिताभिमानमनुत्तमं सुखमपरोक्षं स्वसंवेद्यमेव। तस्यैव कृते विशिष्टस्थानवर्त्तिनः कष्टानि तपांसि महान्ति दानानि दारुणानि युद्धानि भीमानि समुद्रलङ्घनानि मानवाः समाचरन्तीति। निशम्यैतत्तु नियतिवशाच्च तत्पाटवाच्च अबुद्धिमान्द्याच्च अनियमनाच्च तस्यामसौ प्रासजत्।

सा सुदूरं मूढात्मानञ्च तं प्रवहणेन नीत्वा पुरम् उदारशोभया राजवीथ्या स्वभवनमनैषीत्। अभूच्च घोषणा श्वः कामोत्सवइति। उत्तरेद्युः स्नातानुलिप्तमारचितमङ्गलम् आरब्धकामिजनवृत्तं निवृत्तस्वव्रताभिलाषं क्षणमात्रगतेऽपि तया विना दूयमानचित्तं तच्चिह्नहिमता राजमार्गेणोत्सवसमाजं नीत्वा क्वचिदुपवनोद्देशे युवतिजनशतपरिवृतस्य राज्ञः सन्निधौ स्मितमुखेन तेन भद्रे भगवता सह निषीदेत्यादिष्टा सविभ्रमकृतप्रणामा सस्मितं न्यषीदत्।

तत्र काचिदुत्थाय बद्धाञ्जलिरुत्तमाङ्गना देव जितानयाहमस्यै दास्यमद्यप्रभृत्यभ्युपेतं मयेति प्रभुं प्राणंसीत्। विस्मयहर्षमूलश्च कोलाहलो लोकस्योदजिहीत। हृष्टेन च राज्ञा महार्हैरलङ्कारैर्महता च परिबर्हेणानुगृह्य विसृष्टा वारमुख्याभिः पौरमुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत भगवन्नयमञ्जलिः चिरमनुगृहीतोऽयं दासजनः स्वार्थइदानीमनुष्ठेयइति। स तु रागादग्निहतइवोद्भ्राम्याब्रवीत् प्रिये किमेतत् कुतइदमौदासीन्यं क्व गतस्तव मय्यसाधारणोऽनुरागइति। अथ सा सस्मितमवादीत् भगवन् ययाद्य राजकुले मत्तः पराजयोऽभ्युपेतस्तस्याश्च मम च कस्मिंश्चित् सङ्घर्षे मरीचिमावर्जितवतीव श्लाघसइति तयास्म्यहमधिक्षिप्ता दास्यपणबन्धेन चास्मिन्नर्थे प्रावर्त्तिषि सिद्धार्था चास्मि त्वत्प्रसादादिति। स तया तथावधूतो दुर्मतिः कृतानुशयः शून्यवन्नवर्त्तिष्ट। यस्त्वेवं कृततपस्वी तमेव मां महाभाग मन्यस्व। स निर्विण्णं रागमुद्दिश्य तयैव बन्धक्या मद्वैराग्यमर्पितम्। अचिरादेव शक्य आत्मा त्वदर्थसाधनक्षमः कर्त्तुम्। अस्यामेव तावदङ्गपुर्यां चम्पायामिति।

अथ तन्मनश्च्युततमःस्पर्शभियेवास्तं रविरगात्। ऋषिमुक्तश्च रागः सन्ध्यात्मनास्फुरत्। तत्पापादत्तवैराग्याणीव कमलवनानि समकुचन्। अनुमतमुनिशासनश्चाहममुनैव सहोपास्य सन्ध्याम् अनुरूपाभिः कथाभिस्तमनुवर्त्य नीतरात्रिः प्रत्युषस्युदयप्रस्थदाव

कश्चे कस्यचनमपि प्रज्ञयावधीरितप्रकार्यमपि तं नमस्कृत्य नगरायोद-
चलम् अदर्शं च मार्गाभ्यासवर्त्तिनः कस्यापि क्षपणकविहारस्य बहि
र्विविक्ते रक्ताशोकषण्डे निषण्णम् अस्पृष्टसमाधिम् आधिक्षामम् अग्र
गण्यमनभिरूपाणां क्षपणकानां कमपि क्षपणकम्। उरसि चास्य शि-
थिलितमलमिवचयान् मुखान्निपततोऽश्रुबिन्दूनलक्षयम्। अभ्युपेत्यान्ति
कोपविष्टः क्व तपः क्व च रुदितं नचेद्रहस्यमिच्छामि श्रोतुं शोक
हेतुमिति। सोऽब्रवीत् सौम्य श्रूयताम् अहमस्यामेव चम्पायां निधि-
पालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम। वैरूप्यात्तु मम
विरूपकइति प्रसिद्धिरासीत्। अन्यश्चात्र सुन्दरकइति यथार्थनामा
कलागुणैः राढ्यो वसुना नातिपुष्टोऽभवत्। तस्य च मम च वपु
र्वसुनी निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्त्तैरुदपाद्यत। तएव
कदाचिदावयोरुत्सवसमाजे स्वयमुत्पादितमन्योन्यावमानमूलमधिक्षेप
वचनव्यतिकरमुपशमय्य न वपुर्वसु वा पुंस्त्वमूलमपि तु प्रकृष्टगणिका
प्रार्थ्ययौवनो हि यः स पुमान् अतोयुवतिललामभूता काममञ्जरी
यं वा कामयते स हरतु सुभगपताकामिति व्यवास्थापयन्।

अभ्युपेत्यावां प्राहिणुव तस्यै दूतान्। अहमेव किलाऽमुष्याः स्मरो
न्मादहेतुरासम्। आसीनयोश्चावयोर्मामेवोपगम्य सा नीलोत्पलमय
मिवापाङ्गदाम मयि मुञ्चन्ती तं जनमपत्रपयाऽधोमुखं व्यधत्त।
सुभगेन च मया धनस्य गृहस्य गणस्य देहस्य जीवितस्य
च सैवेश्वरी कृता। कृतश्चाहमनया मलमल्लकशेषः हृतसर्वस्वतया
चापवाहितः प्रपद्य लोकोपहासलक्षतामक्षमश्च सोढुं धिक्कृतानि
पौरवृद्धानाम् इह जैनायतने मुनिनैकेनोपदिष्टमोक्षवर्त्मा सुकर
एव वेषो वेषविनिर्गतानामित्युदीर्णवैराग्यस्तदपि कौपीनमजहम्।
अथ पुनः प्रवृद्धमलपङ्कः प्रवृद्धकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्पिपा-
सादिदुःखस्थानासनशयनभोजनेष्वपि द्विपइव नवग्रहो बलवतीभि
र्यातनाभिरभ्यर्दितः प्रत्यवामृशम्। अहमस्मि द्विजातिःस्वधर्म्मो

ममैव पापिष्ठपथावतारः श्रुतिस्मृतिविहितेनैव वर्त्मना मम पूर्व्वजाः प्रावर्त्तन्त। मम तु मन्दभाग्यस्य निन्द्यवेशम् अमन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवणैरनन्तनरकेष्वपि निरयफलम् अफलं विप्रलम्भप्रायम् ईदृशमिदमधर्म्मवर्त्म धर्म्मवत्समाचरणीयमासीदिति प्रत्याकलितस्वदुर्नयः पिण्डीपिण्डं विविक्तमेतदासाद्य पर्य्याप्तमश्रु मुञ्चामीति।

श्रुत्वा चैतदनुकम्पमानोऽब्रुवं भद्र शमय कञ्चित्कालम् अत्रैव निवस निर्जेन यत्नेनासावेव वेश्या यथा त्वां योजयिष्यति तथा यतिष्ये सन्त्युपायास्तादृशा इत्याश्वास्य तम् उत्थितोऽहं नगरमाविशन्नेव चोपलभ्य लोकवादात्सुब्धसमृद्धपूर्णं पुरमिति अर्थानां नश्वरत्वञ्च प्रदर्श्य प्रकृतिस्थानमुम् विधास्यन् कर्णीसुतप्रहिते पथि मतिमकरवम्। अनुप्रविश्य च द्यूतसभामक्षधूर्त्तैः समगंसि। तेषां पञ्चविंशतिप्रकारासु सर्व्वासु द्यूताश्रयासु कलासु कौशलम् अक्षभूमिहस्तादिषु चात्यन्तदुरुपलक्ष्याणि कूटकर्म्माणि तन्मूलानि सावलेपान्यधिक्षेपवचनानि जीवितनिरपेक्षाणि संरम्भविचेष्टितानि सभिकप्रत्ययव्यवहारान् न्यायबलप्रतापप्रायान् प्रयोजितार्थसाधनक्षमान् बलिषु सान्त्वनानि दुर्बलेषु भर्त्सितानि पक्षरचनानैपुण्यमुपायचान्युपप्रलोभनानि ग्लहप्रभेदवर्णनानि द्रव्यसंविभागौदार्य्यम् अन्तरान्तरा अश्लीलप्रायान् कलकलानित्येतानि चान्यानि चानुभवन् न तृप्तिमध्यगच्छम् अह सत्र किञ्चित् प्रमाददत्तशारिके कस्मिंश्चित्कितवे। प्रतिकितवस्तु निर्द्दहन्निव क्रोधताम्रया दृशा मामभिवीक्ष्य "शिक्षयसि रे द्यूतवर्त्म हासव्याजेन आस्तामयमशिक्षितो वराकस्त्वयैव तावद्विचक्षणेन देविष्यामीति" द्यूताध्यक्षानुमत्या व्यत्यषजत्। मया जितश्चासौ षोडश सहस्राणि दीनाराणाम्। तदर्द्धं सभिकाय सभ्येभ्यश्च दत्त्वा अर्द्धं स्वीकृत्योदतिष्ठम्। उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसालापाः। प्रार्थयमानसभिकानुरोधाच्च तदगारेऽत्युदारमभ्यवहारविधिमका-

रवम्। यन्मूलश्च मे दुरोदरावतारः स मे विमर्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत्।

तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरमवधार्य धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनार्धोरुकपरिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुख काकली सन्दंशक पुरुषशीर्षक योगचूर्ण योगवर्तिका मानसूत्र कर्कटक रज्जु दीपभाजन भ्रमर करण्डकप्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे सन्धिं छित्वा पटभाससूक्ष्मच्छिद्रालक्षितान्तर्गृहप्रवृत्तिरव्यथो निजगृहमिवानुप्रविश्य नीवीं सारमहतीमादाय निरगाम्। नीलनीरदनिकरपीवरतिमिरनिविडपीडितायां राजवीथ्यां झटिति शतह्रदासम्पातमिव क्षणमालोकमलक्षयम्। अथासौ नगरदेवतेव नगरमोषरोषिता निःसम्बाधवेलायां निःसृता सन्निकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत्। कासि वासु क्व यासीति सदयमुक्ता भयगद्गदमवादीत्। आर्य पुर्यामस्यामर्यवर्यः कुबेरदत्तनामा वसति अस्म्यहं तस्य कन्या। मां जातमात्रां धनमित्रनाम्ने अयत्यायैव कस्मैचिदिभ्यकुमारायान्वजानाद्भार्यां मे पिता। स पुनरमुष्मिन्नत्युदारतया पित्रोरन्ते वित्तैर्निजैः क्रीत्वेवार्थिवर्गाद्दारिद्र्यं दरिद्र इति सति अथ उदारक इति च प्रीतलोकाधिरोपितापरसाख्यनामनि वरयत्येव तस्मिन् मां तरुणीभूताम् अधन इत्यदत्त्वा अर्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता। तदमङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसङ्केता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना मन्मथैकाभिसारा तदगारमभिसरामि। तन्मां मुञ्च गृहाणैतद्भाण्डमित्युन्मुच्य च मह्यमर्पितवती। दयमानश्चाहमब्रुवम् "एहि साध्वि त्वां नयेयं त्वत्प्रियसमम्" इति त्रिचतुराणि पदान्यचलम्। आपतच्च दीपिकालोकपरिलुप्यमानतिमिरभारं यष्टिकृपाणपाणि नागरिकबलमलक्ष्यम्। प्रवेपमानां कन्यकामवदं भद्रे माभैषीः अस्त्ययम् असि

द्वितीयो मे बाहुः। अपि तु त्वदुरस्यमुपायस्त्वदपेक्षया चिन्तितः प्रायेण भावितविषवेगविक्रियः त्वयाप्यमी वाच्याः निशि वयमिमां पुरीं प्रविष्टाः दष्टश्च ममैष नायको दर्वीकरेणामुष्मिन् सभाकोणे यदि वः कश्चिन्मन्त्रवित्कृपालुः स एनमुज्जीवयन्मम प्राणानाहरेदनाथाया इति। सापि बाला गत्यन्तराभावात् भयगद्गदस्वरा बाष्पदुर्दिनाक्षी बद्धवेपथुः कथंकथमपि गत्वा मदुक्तमन्वतिष्ठत् अश-यिषि चाहं भावितविषविक्रियः। तेषु कश्चिन्नरेन्द्राभिमानी मां निर्वर्ण्य मुद्रातन्त्रमन्त्रध्यानादिभिश्च उपक्रम्याकृतार्थः "गत एवायं कालदष्टः तथाहि श्यावश्यावमङ्गं बद्धा दृष्टिः शान्त एवोष्मा सुचा अलं वासु श्वोऽग्निसात् करिष्यामः कोऽतिवर्त्तेत दैवम्" इति सहे-तरैः प्रायात्। उत्थितश्चाहम् उदारकाय तां नीत्वा अब्रुवम्। अह-मस्मि कोऽपि तस्करः त्वद्गतेनैव चेतसा सहायभूतेन त्वामिमामभिसरन्तीमन्तरोपलभ्य कृपया त्वत्समीपमुपानैषम् भूषणमिदमस्या इत्यंशुपटलपाटितध्वान्तजालं तदर्पितवान्।

उदारकस्तु तदादाय सलज्जश्च सहर्षश्च ससम्भ्रमश्च मामभाषत। आर्य्य त्वयैवेयमस्यां निशि प्रिया मे दत्ता वाक् पुनर्ममापहृता तथाहि न जाने वक्तुम्। त्वत्कर्मैतदद्भुतमिति न ते स्वशीलमद्भुतवत्प्रतिभाति, नैवमन्येनापि कृतपूर्व्वमिति प्रतिनिवर्त्तैव वस्तुशक्तिः नहि त्वय्यन्यदीया लोभादयः, त्वयाद्य साधुतोन्मीलितेति तत्रायस्त्वत्पूर्व्वावदानेभ्यो न रोचते, दृष्टमिदानीमौदार्य्यस्य स्वरूपमिति त्वदाशयमननुमान्य न युक्तो निश्चयः, त्वयामुना सुकृतेन क्रीतोऽयं दासजन इति असारमतिगरीयसा क्रीतोऽसीति स ते प्रत्याधिक्षेपः, प्रियादानस्य प्रतिदानमिदं शरीरमिति तदलाभे निधनोन्मुखमिदमपि त्वयैव दत्तम्, अथवैतावदत्र प्राप्तरूपम् अद्य प्रभृति भर्त्तव्योऽयं दासजन इति मम पादयोरपतत्।

उत्थाप्य चैनमुरसोपश्लिष्य अभाषिषि भद्र कार्य्ये प्रतिपत्ति

रिति। सोऽहमधन्यः न शक्नोमि चैनामन्त्र पित्रोरनभ्यनुज्ञयोपयम्य जीवितुम् अतोऽस्यामेव यामिन्यां देशमिमं जिहासामि कोवा अहं यथा त्वमाज्ञापयसीति। अथ मयोक्तम् अस्त्वेतत् स्वदेशोदेशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य किन्तु बालेयमनल्पसौकुमार्य्या कष्टाः प्रत्यवायभूयिष्ठाश्च कान्तारपथाः स्थैर्य्यमिव किञ्चित् प्रज्ञासत्वयोरनर्थेन हेतुना देशत्यागेन सम्भाव्यते। तत् सज्ञानया सुखमिहैव वस्तव्यम् एहि नयावैनां स्वमेवावासमिति। अविचारानुमतेन तेन सख्यैवैनां तद्गृहमुपनीय तथैवापसर्पभूतया तत्र वृद्धायाश्चाविशेषमचोरयाव। ततो निष्पत्य कश्चिन्मुवितर्कं निधाय समुच्चलन्तौ नागरिकपुरुषसम्पाते मार्गपार्श्वशायिनं कञ्चिन्मत्तवारणमुपरि पुष्कमाक्रम्याधारोहाव। ग्रैवेयप्रोतपादयुगलेन च मयोत्थाप्यमानएव पतिताधोरणपृथुलोरःस्थलपरिमलः पुरीतरुलतापरीतदन्तकाण्डः स रक्षिकबलमक्षिणोत्। अध्वंसयाव चामुनैवार्थपतिभवनम्। अपवाह्य च क्वचन जीर्णोद्याने शाखाग्राहिकया चावातराव। स्वगृहगतौ च स्नातौ शयनमध्याशिश्रयाव।

तावद्देवोदगादुदधेः उदयाचलेन्द्रपद्मरागभङ्गकल्पं कल्पद्रुमहेमपल्लवापीडपाटलं पतङ्गमण्डलम्। उत्थाय च धौतवक्त्रौ प्रगेतनमङ्गलान्यनुष्ठाय अत्याकुलतुमुलं पुरमनुविचरन्तावशृणुव वरवधूगृहेषु कोलाहलम्। अथार्थैरर्थपतिः कुवेरदत्तमाश्वास्य कुलपालिकाविवाहं मासावधिकमकल्पयत्। उपह्वरे पुनरित्यभिहितं धनमित्रम् उपतिष्ठ सखे एकान्तएव चर्म्मरत्नभस्त्रिकामिमां पुरस्कृत्य अङ्गराजम् आचक्ष्व च जानात्येव देवो नैककोटिसारस्य वसुमित्रस्य मां धनमित्रं नामैकपुत्रं सोऽहं मूलहरत्वमेत्य अर्थिवर्गादस्यवयातो मदर्थमेव संवर्द्धितायां कुलपालिकायां महादरिद्रदोषात्पुनः कुवेरदत्तेन दुहितर्य्यर्थपतये दित्सितायाम् उद्वेगादुज्झितुमसून् उपपौरिकं जरद्वनमवगाह्य कण्ठन्यस्तपाशिकः केनापि जटाधरेण

निवार्य चमुक्तः किं ते साहसस्य मूलमिति। मयोक्तम् सखे सोदर्यं दारिद्र्यमिति। स पुनरेवं कृपालुरभ्यधात् तात मूढोऽसि नान्यत्पापिष्ठतममात्मत्यागात् आत्मानमात्मनावसादे वोद्धरन्ति सन्तः। सन्त्युपाया धनार्जनस्य बहवः नैकोऽपि चिरम् कण्ठप्रतिसन्धानपूर्वस्य प्राणत्यागस्य किमनेन सोऽस्महं नवसिद्धः साधितेयं मया हितो चर्मरत्नभस्त्रिका चिरमहमस्याः प्रसादात् कामरूपेषु कामप्रदः प्रजानामवात्सं मत्वा रिक्थं जरसि भूमिस्वर्गं मन्ये देशं प्रवेष्टुमागतः तामिमां प्रतिगृहाण मदन्यच्चेयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्धे इति हि तद्गता प्रतीतिः। किन्तु यत्सकाशाद्‌-न्यायापहृतं तत्तस्मै प्रत्यर्पणीयं न्यायार्जितन्तु देवब्राह्मणेभ्यस्त्याज्यम् अथेयं देवतेव शुचौ देशे निवेश्यार्च्यमाना प्रातः प्रातः सुवर्णपूर्णैव दृश्यते स एष कल्प इति बद्धाञ्जलये मह्यमेनां दत्त्वा किमपि याव-च्छिद्रं प्राविशत्। इयञ्च रत्नभूता चर्मभस्त्रिका देवायानिवेद्य नोपजीव्या इत्यानीता परन्तु देवः प्रमाणमिति"। राजा च निवृत्त मेवं वक्ष्यति भद्र प्रीतोऽस्मि गच्छ यथेष्टमेनामुपभुङ्क्ष्वेति। भूयश्च ब्रूहि यथा न कश्चिदेनां मुष्णाति तथानुगृह्यतामिति। तदप्यवश्य-मसावभ्युपैष्यति। ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने वरिवस्यमानां स्तेयलब्धैरर्थैर्भस्त्रामापूर्य प्राक्के लोकाय दर्शयिष्यसि ततः कुबेरदत्तस्तृष्णायमानार्थपतिमवधूय लुब्धः कन्यकया स्वयमेव त्वामुप स्थास्यति। अथ कुपितोऽर्थपतिश्चर्मरत्नं मदर्थगर्व्वादभियोक्ष्यते तच्च भूयश्चिन्त्योपायैः कौपीनावशेषं करिष्यावः। स्वयञ्च चौर्य्यमनेनैवाभ्यु-पायेन सुप्रच्छन्नं भविष्यतीति।

इत्युक्त्वा धनमित्रो यथोक्तमन्वतिष्ठत्। तदहरेव मन्नियोगाद्वि-मर्दकोऽर्थपतिसेवाभियुक्तः स्वस्योदारके वैरमभ्यवर्द्धयत्। अर्थलुब्धश्च कुबेरदत्तो निवर्त्यार्थपतेर्धनमित्रायैव तनयां दाननयं प्रादिशत प्रत्यवस्थाच्चार्थपतिः।

एष्वेव दिवसेषु काममञ्जर्याः स्वसा यवीयसी रागमञ्जरी नाम पञ्चवीरगोष्ठे सङ्गीतकमनुष्ठास्यतीति सान्द्रादरः समागमन्नागरजनः। सखाहं सह सख्या धनमित्रेण तत्र संन्यधिषि। अरङ्गस्थायाश्च तस्यां द्वितीयरङ्गपीठं ममाभून्मनः। तद्दृष्टिविभ्रमोत्पलवनसचापाश्रयश्च पञ्चशरो भावरसानां सामग्र्यात् समुदितबलइव मामतिमात्रमव्यथयत्। अथासौ नगरदेवतेव नगरमोषरोषिता लीलाकटाक्षमालाशृङ्खलाभि र्नीलोत्पलपलाशश्यामलाभि र्मामबध्नात्। रङ्गोत्थिता च सा सिद्धिलाभशोभिनी किं विलासात् किमभिलाषात् किमकस्मादेव वा न जाने असकृन्मां सखीभिरप्यनुपलक्षितेनापाङ्गप्रेक्षितेन सविभ्रमारेचितभ्रूलतमभिवीक्ष्य सापदेशञ्च किञ्चिदाविष्कृतदशनचन्द्रिकं स्मित्वा लोकलोचनमानसानुयाता प्रातिष्ठत। सोऽहं स्वगृहमेत्य दुर्निवारयोत्कण्ठया दूरीकृताहारस्पृहः शिरःशूलस्पर्शमपदिश्य विविक्ते तल्पे मुक्तैरवयवैरशयिषि।

अतिनिपुणश्च मदनतन्त्रे मामभ्युपेत्य धनमित्रो रहस्यकथयत्। सखे सैव धन्या गणिकादारिका यामेवं भवन्मनोऽभिनिविशते। तस्याश्च मया सुलक्षिता भावप्रवृत्तिः तामप्यचिरादयुग्मशरः शरशयने शाययिष्यति स्थानाभिनिवेशिनोश्च वामयत्नसाध्यः समागमः। किन्तु सा किल वारकन्यका गणिकास्वधर्म्मप्रतीपगामिना भद्रोदारेणाशयेन समगिरत गुणशुल्काहं न धनशुल्का नच पाणिग्रहणादृते अन्यभोग्यं यौवनमिति। तच्च गुरुः प्रतिषिध्याकृतार्था तद्भगिनी काममञ्जरी माता च माधवसेना राजानमश्रुकण्ठ्या व्यजिज्ञपताम्। देव युष्मद्दासी रागमञ्जरी रूपानुरूपशीलशिल्पकौशला पूरयिष्यति मनोरथानित्यासीदस्माकमतिमहत्याशा साद्य मूलच्छिन्ना यदियमतिक्रम्य स्वकुलधर्म्मम् अर्थनिरपेक्षा गुणेभ्यएव स्वं यौवनं विचिक्रीषते कुलस्त्रीवृत्तमेवाभ्युपगममनुतिष्ठासति साचेदियं देवपादा

यद्यपि तावत्प्रकृतिमापद्येत तदा पेशलं भवेदिति। राज्ञा च तदनुरोधात्तथानुशिष्टा सम्प्रत्यमानाप्यवैव सा यदासीत् तदास्याः स्वसा माता च रुदितनिर्बन्धेन राज्ञे समशिषतां यदि कश्चित्कुलजोऽस्यादिच्छया विनीतां बालां विप्रलभ्य नाशयिष्यति स तस्करवद्वध्यइति। तदेवं स्थिते धनाहृते न तज्जनोऽनुमन्यते ननु धनदायासावभ्युपगच्छतीति विचिन्त्योऽभ्युपायइति।

अथ मयोक्तं किमत्र चिन्त्यं गुणैस्तामावर्ज्य गूढमर्थैस्तज्जनं तोषयावइति। ततश्च काचित्कामजर्य्याः प्रधानदूतीं धर्म्मरक्षितां नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिभिरुपसंगृह्य तन्मुखेन तया बन्धक्या पणबन्धमकरवम् "अजिनरत्नमुदारकाम्मुषित्वा मया तुभ्यं देयं यदि प्रतिदानं रागमञ्जरीमि,,। सोऽहं प्रतिपन्नायाश्च तस्यां तथा तमर्थं सम्पाद्य मङ्गलोन्मादिताया रागमञ्जर्य्याः करकिसलयमग्रहीषम्। यस्याश्च निशि चर्म्मरत्नस्तेयवादस्तस्याः प्रारम्भे कार्य्यान्तरापदेशेन समाहूतेषु प्रकृतबन्धुषु नागरमुख्येषु मत्प्रणिधि विमर्द्दकोऽर्थपतिगृह्यो नाम भूत्वा धनमित्रमुपह्वरे बह्वतर्जयत्। उक्तश्च धनमित्रेण भद्र कस्तवार्थः यत्परस्य चेतोमां माकोशसि न स्मरामि स्वल्पमपि तवापकारं मत्कृतमिति। स भूयोऽपि तर्ज्जयन्निवाब्रवीत् स एव धनगर्वानाम यत्परस्य भार्य्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य सीचिकीर्षसि ब्रवीषि च कस्तवापकारो मत्कृतइति ननु प्रतीतमेवैतत् सार्थवाहस्यार्थपतेर्विमर्द्दको वहिश्चराः प्राणाइति सोऽहं तत्कृते प्राणानपि परित्यजामि ब्रह्महत्यामपि न परिहरामि ममैकराज्यनाशप्रतीकारस्तवैव चर्म्मरत्नापहारदाहज्वरइति। तथा ब्रुवाणश्च पौरमुख्यैः सामर्षं निषिध्यापवाहितो गतोऽभूत्।

इयञ्च वार्त्ता कृमिमार्गिणा धनमित्रेण चर्म्मरत्नलाभमादावुपक्षिप्य पार्थिवाय निवेदिता। स चार्थपतिमाह्वयोपह्वरे पृष्टवान्

अस्ति किमस्ति कश्चिद्विमर्द्दको नामाभवत्सुहृदिति। तेन च मूढात्मना अस्ति देव परं मित्रं किन्तु तेनार्थइति कथिते राज्ञोक्तम् अपि शक्नोषि तमाह्वातुमिति। बाढमस्मि शक्तइति निर्गत्य खट्वके वेश्या-वाटे द्यूतसभायामापणे च निपुणमन्विष्यन्नोपलब्धवान्। कथं वोप-लभेत स वराकः स खलु विमर्द्दको मदाहितत्वदभिज्ञानचिह्नो मन्नियोगात् त्वदन्वेषणायोज्जयिनीं तदहरेव प्रातिष्ठत। अर्थपतिस्तु तमदृष्ट्वा तत्कृतमपराधमात्मसम्बन्धीति मत्वा मोहाद्भयाद्वा प्रत्या ख्याय पुनर्धनमित्रेण विभावितेन कुपितेन राज्ञा निगृह्य निगड़ बन्धनमनीयत।

तेष्वेव च दिवसेषु विधिना कल्पोक्तेन चर्म्मरत्नं दोग्धुकामा काम मञ्जरी पूर्वं दुग्धं स्वपक्षीभूतविकल्पकं रहस्युपहृत्य ततोऽपहृतं सर्व्वं मर्थजातं तस्मै प्रत्यर्प्य सप्रत्ययञ्च अङ्गुलीय प्रत्यागमत्। सोऽपि कथञ्चिन्निर्ग्रन्थिकत्वमोचितात्मा मदनुशिष्टो वृत्ततमः स्वधर्म्ममेव प्रत्यपद्यत। काममञ्जर्य्यपि कतिपयैरेवाहोभिरनन्तकरणेन अजिन रत्नदोहाशया समभ्युदयमकरोत्। अथ मत्प्रयुक्तो धनमित्रः पार्थिवं मिथो व्यज्ञापयत् देव येयं गणिका काममञ्जरी लोभोत्कर्षात् लोभ मञ्जरीति लोकोपक्रोशपात्रमासीत् साद्य मुसलोलूखलान्यपि निर पेक्षं त्यजति तन्मन्ये मच्चर्म्मरत्नलाभं हेतुं तस्य खलु कल्पस्तादृशः वणिग्भ्यो वारमुख्याभ्यश्च वा दुग्धे नान्येभ्यइति हि तद्गता प्रतीतिः अतोऽमुष्यामस्ति मे शङ्केति।

सा सद्यएव राज्ञा सह जनन्या समाहूयत। व्यथितवर्णेनेव मयोपह्वरे कथितं नूनमार्य्ये सर्व्वंसत्यमादितिप्रकाशयितव्यमाशङ्कनीयचर्म्म रत्नलाभा तदनुयोगाद्राजकुलेन समाहूयसे भूयोभूयश्च निर्ब- न्धात्त्वया विद्यतस्ति तदागतितेनाहमपदेश्यः ततश्च मे भावी चित्रवधः हते च मयि न जीविष्यत्येव ते भगिनी तव च निःस्वी-भूता चर्म्मरत्नञ्च धनमित्रमेव प्रतिभजिष्यति तदियमापत् समन्ततो

ऽनर्थानुबन्धिनी तत् किमत्र प्रतिविधेयमिति। तया तच्छ्रुत्वा चा-सूचि विचक्षणाभ्याम् अस्यैवैतद्रक्षणाशिक्षाग्निभिर्भिन्नप्रायं रहस्यम्। राज्ञश्च निर्बन्धाद्धनमित्रश्चतुरमतिर्निह्नुत्यापि निपतमानमतिरपदेशेन चोरितस्य त्वयि त्वयि त्वपदिष्टे सर्वमेतत्कुटुम्बमवसीदेत्। अथ पतौ च तदयशो रूढम् अङ्गपुरप्रसिद्धश्च तस्य श्रीनाशशङ्काभिः सत्कृतम् अमुनैव तदस्मभ्यं दत्तमित्यपदिश्य वरमात्मा गोपयितुमिति मामभ्युपगमय्य राजकुलमगमताम्।

राज्ञानुयुक्तो च नैष न्यायो वैश्यकुलस्य यदातुरपदेशः। नन्वर्थै-र्न्यायार्जितैरेव पुरुषार्थमनुपतिष्ठन्तीत्यसकृदतिप्रशस्य कर्णनासा-च्छेदोपक्षेपभीषिताभ्यां दग्धबन्धकीभ्यां सएव तपस्वी तस्करत्वेनार्पयति रयाच्यत। कुपितेन च राज्ञा तस्य प्राणेषूद्यतोदण्डः। प्राञ्जलिना धनमित्रेणैव प्रत्यषिध्यत "आर्य्य मौर्य्यदत्तएष वरो वणिजाम् ईदृशे-ष्वपराधेषु नाप्यसुभिरभियोज्याः यदि कुपितोऽसि हृतसर्वस्वो निर्व्वासनीयः पापएषइति"। तच्छ्रुत्वा च धनमित्रस्य कीर्तिरप्रथत अप्रीयत च भर्त्ता। पटच्चरश्छेदशेषः अर्थपतिरर्धमत्तः सर्व्वं पौर जनसमक्षं निरवास्यत। तद्व्यापारान्तु केनचिदवयवेन सा वराकी काममञ्जरी चर्म्मरत्नभस्त्रिकापविद्धसर्व्वस्वा सानुक्रोशं धनमित्रा-भिचोदितेन भूपेनाभ्यरक्ष्यत। धनमित्रश्चाहमिव गुणिनि कुलपालि-कामुपायंस्त।

तदेवं सिद्धसङ्कल्पो रागमञ्जरीगृहं हेमरत्नपूर्णमकरवम्। अस्मिंश्च पुरे कृत्स्नस्त्ववर्गस्तथा मुषितः यथा कपालपाणिः सैरेव धनैर्म्मदिरायितैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्रमत्।

नन्वमतिनिपुणोपि पुरुषो नियतिलिखितां लेखामतिक्रमितुं यतोऽहमेकदा रागमञ्जर्याः प्रणयकोपप्रशमनाय सानुनयं पायि-तायाः पुनःपुनः प्रणयसमर्पितमुखमधुगण्डूषम् आस्वादमास्वादं मदे नास्पृक्षे। क्षीबं हि मदोन्मादयोरमार्गेष्वप्युचितकर्म्मणैव प्रवर्त्तनम्।

यद्यहमुपोढमदो नगरमिदमनयैकयैव शर्व्वर्य्या निर्द्धनीकृत्य त्वद्भवनं पूरयेयमिति प्रस्थितश्चिरमापप्रयामाञ्चिन्त्यपथगतातिवर्त्ती मत्त वारणइव रभसच्छिन्नशृङ्खलः क्वापि, श्वभ्रा शृगालिकाख्ययानु-गम्यमानो नातिपरिकरोऽसिद्वितीयो रंहसा परैरोदचलम्। अभि पततोऽपि नागरिकपुरुषानप्रक्रमेवावगाह्य तस्करइति तैरभिहन्य-मानोऽपि नातिकुपितः क्रीड़न्निव मदावसन्नहस्तपातितेन निस्त्रिंशेन विनाऽेव हत्वा* अवघूर्णमानतामृदृष्टिरपतम्। अनन्तरमार्त्तरवा-न्विक्रन्दन्ती शृगालिका ममाभ्याशमगमत् अबध्ये चाहमरिभिः। आपदा तु मदापहारिण्या सद्यः बोधितश्च तत्क्षणोपजातया प्रति-भया अचीचरम्। अहो ममेयं मोहमूला महत्यापदापतिता प्रक्रन तरञ्च सख्यं मया सह धनमित्रस्य मत्परिग्रहत्वञ्च रागमञ्जर्य्याः मदेनसा च तौ प्राप्तौ तौ श्वो नियतं निग्राहयिष्येते। तदियमिह प्रतिपत्तिः यथागृहीष्यमाणया मत्रिंयोगतस्तौ परित्रास्येते माञ्च कदा चिदनर्थादितस्तारयिष्यतीति कमप्युपायमात्मनैव निर्णीय शृगा-लिकामगादिषम् अपेहि जरतिके या तामर्थलुब्धां दग्धगणिकां राग मञ्जरिकामजिनरत्नमत्तेन प्रभुणा मे मिथश्छद्मना धनमित्रेण सङ्ग-मितवती सा ह्यतापि तस्य पापस्य चर्मरत्नमोषात् दुहितुश्च ते साराभरणापहारादहमद्य निःशल्यमुत्सृज्येयं जीवितमिति। सा पुन र्बहुटिलञा परमधूर्त्ता साधुभद्रमुदञ्जलिकान् पुरुषान् सप्रणाम मासादितवती कामपूर्वं मम पुरस्तादवाचत भद्रकाः प्रतीक्ष्यतां क्षणमात्रं यावदस्मादस्मदीयं सर्वं मुषितमर्थजातमवगच्छेयमिति। तथेति तैः प्रतिपन्ने पुनर्मत्समीपमासाद्य सौम्य क्षमस्वास्य दासीजन-स्यैकमपराधम् अस्तु स कामं त्वत्कलत्राभिमर्षी वैरास्पदं धन मित्रः त्वं तु चिरक्षतां ते परिचर्य्यामनुग्रहीतुमर्हसि दासीं राग मञ्जरीम् आकल्पसारोऽपि हि अस्याजीवाञ्जनः तद्गृहे च निहितमस्या भूषणमिति पादयोरपतत्। ततो दयमानइवाहमब्रुवं भवतु अस्तु

वृत्तवर्त्तिनः किं ममामुष्यां वेरानुबन्धेनेति तद्ब्रुवन्निव कार्यशेषमाम-शिक्षयम् एवमेवं प्रतिपत्तव्यमिति। सा तु प्रतिपन्नार्था जीव चिरं प्रसीदन्तु ते देवताः देवो मूलदेवः पौरप्रीतो मोचयतु त्वाम् एतेऽपि भद्रमुखास्त्वां दयन्तामिति रुदत्यपासरत् । आनीये चाह-मारक्षिकनायकस्य शासनाचारकम् ।

अथोत्तरेद्युरागत्य दृप्ततरः सुभगमानी सुन्दरम्मन्यः पितुर-त्ययादचिराधिष्ठिताधिकारस्तारुण्यमदादनतिपक्वः कान्तको नाम नागरिकः किञ्चिदिव भर्त्सयित्वा मामभ्यधत्त न चेद्धनमित्रस्याजिन-रत्नं प्रतिप्रयच्छसि न चेदा नागरिकेभ्यश्चोरितकानि प्रत्यर्पयसि द्रक्ष्यसि पारमष्टादशानां कारणानाम् अन्ते च मृत्युमुखमिति । मया तु स्मयमानेनाभिहितं सौम्य यद्यपि दद्यामाजन्मनो मुषितं धनं न त्वर्थपतिदारापहारिणः प्रत्नोर्मे मित्रमुखस्य धनमित्रस्य चर्म-रत्नप्रत्याशां पूरयेयम् यद्यपैव तत् अयुतमपि यातनानामनुभवेयम् इयं मे साधीयसी सन्धेति । तेनैव क्रमेण वर्त्तमाने मासमात्रेण प्राये प्रतिदिनमनुयोगव्यतिकरेऽनुगुणान्नपानलाभात् कतिपयैरे-वाहोभिर्विरोपितव्रणः प्रकृतिस्थोऽभवम् ।

अथ कदाचिदच्युताम्बरपीतातपत्विषि क्षयिणि वासरे शृङ्गवर्णा शृङ्गालिका उज्ज्वलेन वेषेणोपहत्य दूरस्थानुचरा मामुपश्लिष्या-ब्रवीत् आर्य्यं दिष्ट्या वर्द्धसे फलिता तव सुनीतिः । यथा त्वयादिष्टे तथा धनमित्रमेत्याब्रुवम् । आर्य्यस्तवैवमापन्नः सुहृदित्युवाच “अद्य मद्यवेशसंसर्गसुलभात् पानदोषाद्वद्धः त्वया पुनरविप्लुतम् अद्यैव राजा विज्ञापनीयः । देव देवप्रसादादेव पुरापि मदजिनरत्नमर्थ-पतिमुषितमासादितम् अथ तु भर्त्तुः रागमज्ञपर्द्धाः कश्चिदपधूर्त्तः कलासु चावित्वेषु चोक्कवार्त्तासु चातिशैथिल्यात् मया समवक्यत तत्सम्बन्धाच्च वस्त्राभरणप्रेषणादिना तद्भार्यां प्रतिदिनमन्ववर्त्तं तद-सावाप्तश्चिरं निकृष्टाशयतया कितवः । तेन च कुपितेन हृतं तच्चर्म

रत्नम् आभरणसमुद्गकश्च तस्याः। स तु भूयस्तोषाय धनमित्रस्तत
नागरिकपुरुषैः आयसेन चामुना अनुष्ठत्य वदन्यै रागमञ्जरी
परिचारिकायै पूर्वंप्रजल्पानुवर्तिना तल्लाभाभिधानोद्देशः कथितः।
ममापि चर्मरत्नमुपायोपक्रान्तो यदि प्रयच्छेदिह देवपादैः प्रसादः
कार्य इति। तथा निवेदितश्च नरपतिरसुभिर्मामवियोज्य उपच्छन्द-
नैरेव स्वं ते दापयितुं प्रयतिष्यते तन्नः पथ्यमिति"। श्रुत्वैव च
त्वदनुभावप्रत्ययादनतिचतुरेण तेन तथैव सम्पादितम्। अथाहं
तदभिज्ञानप्रत्यायिताया रागमञ्जर्याः सकाशात् यथेप्सितानि वसूनि
लभमाना राजदुहितुरम्बालिकाख्याधात्र्याः मातुलिकां त्वदादिष्टेन
मार्गेणाम्बरद्वयं तामेव च संक्रमीकृत्य रागमञ्जर्यैवाम्बालिकायाः
सख्यं परमवीवृधम्। अहरहश्च नवनवानि प्राभृतानि उपहरन्ती
कथाभिश्चाभिश्चित्तहारिणीः कथयन्ती तस्याः परं प्रसादपात्रमासम्।
एकदा च हर्म्यं गतायास्तस्याः स्वार्गलितमपि कर्णकुवलयं स्रस्तमिति
प्रतिसमादधती ममत्वेव प्रत्याख्य पुनश्चत्क्षिप्य भूमेः तेन उपकन्यका
पुरं कारणेन केनापि भवनाङ्गनं प्रविष्टस्य कान्तकस्योपरि कुहर
प्रसक्तपारावतत्रासनापदेशात् प्रहसन्ती प्राहार्षम्। सोऽपि धन्य-
मन्यः किञ्चिदुन्मुखः क्षयमाणो मत्कर्मप्रहासितायाः राजदुहितुर्वि
लासप्रायमाकारमात्माभिलाषमूलमिव यथा सङ्कल्पयेत्तथा मयापि
संज्ञयैव किमपि चतुरमाचेष्टितम्। आकृष्टधन्वना च मनसिजेन
विद्धः सन् दिग्धफलेन पत्त्रिणातिमुग्धः कथं कथमप्यपासरत्। सायञ्च
राजकन्यकाकुलीयकमुद्रितां वासताम्बूलवरांशुकयुगलभूषणावयव-
गर्भाञ्च पेटिकां कयाचिद्दासिकया ग्राहयित्वा रागमञ्जर्या इति
नीत्वा कान्तकस्यागारमगाम्। अगाधे च रागसागरे मग्नो नावमिव
मामुपलभ्य परमहृष्यत्। अवस्थान्तराणि च राजदुहितुः सुदारु-
णानि आवर्णयन्त्या मया स दुर्मतिर्दूरमुदमाद्यत। तत्प्रार्थिता
चाहं तत्प्रियाप्रहितमिति ममैव मुखताम्बूलोच्छिष्टानुलेपनं निर्माल्यं

मलिनांशुकमात्रेणुवपाहरम् तदीयानि च राजकन्यार्थमित्यादाय क्षणमेवापाविशम्। इत्थञ्च सम्मुखितसम्पदाभिरेवाक्ते मयोपमन्त्रितोऽभूत् "आर्य्य चक्षुष्मान्येव त्वमविसंवादीति तथाहि समातिवेशः कश्चित्कार्त्तान्तिकः कान्तकस्य च्छले राज्यमिदं पतिष्यति तादृशानि तस्य लक्षणानीत्यादिक्षत्। तदनुरूपमेव च त्वामियं राजकन्यका कामयते तदेतदपत्यस्य राजा तया त्वां समागतमुपलभ्य कुपितोऽपि दुहितुर्मरणभयान्नोपेक्षिष्यति प्रत्युत प्रापयिष्यत्येव यौवराज्यम्। इत्थञ्चायमर्थोऽर्थानुबन्धी किमिति तात नाराध्यते। यदि कुमारीपुरप्रवेशाभ्युपायं नावबुध्यसे ननु बन्धनागारभित्तेर्व्योमचयमन्तरालमारामप्राकारस्य केनचित्तु चक्रवर्तैकागारिकेण तावतीं सुरङ्गां कारयित्वा प्रविष्टस्योपवनं तदुपरिष्टादक्षदायचैव रथ्या। रक्षतरोहि तस्याः परिजनोन रहस्यं भेत्स्यतीति।" सोऽब्रवीत् "साधु भद्र दर्शितम् अस्ति कश्चित्तस्करः खननकर्म्मणि सगरसुतानामिवान्यतमः सचेल्लभ्यः सद्योनेतत्कर्म्म साधयिष्यतीति।" कतमोऽसौ किमिति न लभ्यतइति मयोक्ते येन तद्दिनमिभस्य चर्म्मरत्नं मुषितमिति त्वामेव निरदिक्षत्। "यद्येवम् यदि त्वयास्मिन् कर्म्मणि साधिते विमोचयायेत्वामहं मोचयिष्यामीति शपथपूर्व्वं तेन सन्धाय सिद्धेऽर्थे भूयोऽपि निगडयित्वा योऽसौ चोरः स सर्व्वथापक्रान्तो ननु धृष्टतमः प्रसह्य वैरस्तदभिनरत्नं दर्शयिष्यतीति राज्ञे विज्ञाप्य चित्रमेनं घातयिष्यसि। तथा च सति अर्थः सिध्यति रहस्यञ्च न स्रवतीति" मयोक्ते सोऽतिहृष्टः प्रतिपद्य मामेव ...पणपरोभमे नियुज्य बहिरवस्थितः प्रामरूपमितः परं चिन्त्यतामिति।

प्रीतेन च मयोक्तं मदुक्तमक्तं त्वन्नयवशात् भूयात् वामयेनमिति। अथानीतेनामुना मन्मोचनाय शपथः कृतः मया च रहस्यानिर्भेदाय। विनिगडीकृतश्च स्नानभोजनविलेपनान्यनुभूय निशान्धकारात् काराभित्तिकोणादारभ्योरगास्येन सुरङ्गामकरवम्। अपि-

अथ चैवं हन्तुमनसैवामुना मन्मोचनाय शपथः कृतः तदमुं चापि नासत्यवाददोषेण स्पृक्ष्यसे इति । निष्पततश्च मे निगडनाय प्रसार्य्यमाण पाणेरस्य पादेनोरसि निहत्य पतितस्य तस्यैवासिधेन्वा शिरोन्य- कृन्तम् । अकथयञ्च छन्नमालिकां भज भद्रे कथम्भूतः कन्यापुरसन्नि- वेशः महानयं प्रयासो मा वृथैव भूत् अमुं च किञ्चिच्चोरयित्वा निव- र्तिष्यइति । तदुपदर्शितविभागश्चावगाह्य कन्यान्तःपुरं प्रज्वलत्सु मणिप्रदीपेषु नैकक्रीड़ाखेदसुप्तस्य परिजनस्य मध्ये महार्हरत्नप्रत्युप्त सिंहाकारदन्तपादे हंसतूलगर्भकोमलशय्योपधानशालिनि कुसुम लवच्छुरितपर्य्यन्ते पर्य्यङ्कतले दक्षिणपादपार्ष्ण्यधोभागानुवेष्टितेतर चरणाग्रपृष्ठम् ईषद्विवृतमधुरगुल्फसन्धि परस्पराश्लिष्टजङ्घाकाण्डम् आकुञ्चितकोमलोभयजानु किञ्चिद्वेल्लितोरुदण्डयुगलम् अधिनितम्ब न्यस्तमुक्तैकभुजलताग्रपेशलम् अपाश्रयान्तनिहिताकुञ्चितेतरभुजल- तोत्तानतलकरकिसलयम् आभुग्नश्रोणिमण्डलम् अतिश्लिष्टची- नांशुकान्तरीय अनतिवलितमुत्तरोदरम् अणुतरनिःश्वासारम्भ- कम्प्यमानकठोरकुचकुड्मलम् आतिरश्चीनबन्धुरशिरोधरोद्देशदृश्य माननिष्ठ्यूततपनीयर अपर्य्यस्तपद्मरागरुचकम् अर्द्धलक्ष्याधरकर्णपाश निभृतकुण्डलम् उपरिपरावृत्तश्रवणपाशरत्नकर्णिकाकिरणमञ्जरी पिञ्जरितविषमन्यस्तविकटशिथिलशिखण्डबन्धम् आत्मप्रभापटलदुर्ल- क्ष्य पाटलोत्तराधरविवरं गण्डस्थलीसंक्रान्तहस्तपल्लवदर्शितकर्णाव- तंसकान्त्यम् उपरि कपोलादर्शतलनिविष्टशिथिलविलासपत्रजातिजनित विशेषकश्रियम् आमीलितलोचनेन्दीवरम् अविभ्रान्तभ्रूपताकम् उद्भिद्यमानश्रमजलपुलकभिन्नशिथिलचन्दनतिलकम् आननेन्दुसम्मु- खालकलतञ्च विश्रब्धप्रसुप्ताम् अतिधवलोत्तरच्छदनिमग्नप्रायैकपार्श्वं तया चिरविलसनखेदनिश्चलां शरदम्भोधरोत्सङ्गशायिनीमिव सौदा- मिनीं राजकन्यामपश्यम् ।

दृष्ट्वैव स्फुरदनङ्गरागश्चकितचोरयितव्यनिस्पृहस्तयैव तावच्चौर्य्य- मापहृदयः किंकर्त्तव्यतामूढः क्षणमतिष्ठम् । अतर्कयञ्च नचेदिमां

वामलोचनामप्राप्य यां न शक्ष्यति मां जीवितुं वसन्तबन्धुः । असङ्केतितपराङ्मुखी चेयमतिबाला व्यक्तमात्मसंरम्भं विवृण्वाना मनोरथम् अतोऽहमेवाप्नोमि तदियमत्र प्रतिपत्तिरिति नागदन्तावलम्बिनीस वालुकाकल्पवर्त्तितं फलकमादाय मणिसमुद्गकात् वर्णवर्त्तिकामुद्धृत्य तां तथाशयानां तस्याश्च मामाबद्धाञ्जलिं चरणलग्नमालिखम् । आर्य्याञ्चैताम् ।

त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते ।
स्वपिहि मया सह सुरतव्यतिकरखिन्नेव मा मैवम् ।

हेमकरण्डकाच्च वासताम्बूलवीटिकां कर्पूरस्फुटिकां पारिजातकञ्चोपयुज्य अलक्तकपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम् । अङ्गुलीयकविनिमयञ्च कृत्वा कथंकथमपि निरगाम् । सुरुङ्गया च प्रत्येत्य बन्धनागारं तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नस्तेष्वेव दिनेषु मित्रत्वेनोपचरितस्य एवं मया हृतस्तपस्वी कान्तकस्त्वया प्रतिभिद्य रहस्यं लब्धो मोक्षस्त्युपदिश्य सह शृगालिकया निरक्रामिषम् ।

नृपतिपथे च समागत्य रक्षिकपुरुषैरग्रहो अचिन्तयञ्च अलमस्मि जवेनापसर्त्तुमनाकृष्ट एवैभिः एषा पुनर्वराकी गृह्येत तदिदमत्र प्राप्तरूपमिति । तानेव चपलमभिपत्य स्पष्टसमर्पितकूर्परः पराङ्मुखः स्थित्वा यद्यहमस्मि तस्करः भद्रा बध्नीत मां युष्माकमयमधिकारो न पुनरस्या वर्षीयस्या इत्यवादिषम् । सा तु तावतैव गृहीतमदभिप्राया तान् सप्रणाममभ्युपेत्य भद्रमुखा ममैष पुत्रो वायुग्रस्तः चिरचिकित्सितः पूर्वेद्युः प्रसन्नकल्पः प्रकृतिस्थएव जातः जातास्थया मया बन्धनान्निष्क्रमय्य स्नापितोऽनुलेपितश्च परिधाप्य निष्प्रवाणियुगलम् अभ्यवहार्य्य परमान्नमौशीरेऽद्य कामचारः कृतोऽभूत् । अथ निशीथे भूयएव वायुनिघ्नो निवृत्य कान्तारं नृपतिदुहिता रमेयमिति रंहसा परेत्य राजपथमभ्यपतत् । निरूप्य चाहं पुत्रमेव सततमस्यां वेलायामनुधावामि तत्प्रसीदत बद्ध्वैनं मह्यमर्पयतेति यावदसौ

क्रन्दति तावदहं स्थविरे केन देवो मातरिश्वा बद्धपूर्व्वः किमेते काकाः घोलूकस्य मे निग्रहीतारः शान्तं पापमित्यभ्यधावम्। असावप्यमीभिरमेयोन्मत्ता या अनुन्मत्त इत्युन्मत्तं मुक्तवती कस्त्वमिदानीं बध्नातीति निन्दिता कदर्थिता रुदत्येव मामन्वधावत्। गत्वा च रागमञ्जरीगृहं चिरवियोगविक्लवामिमां यथाविधं समाश्वास्य तां निशाशेषमनयम प्रभाते पुनरुदारकेण च समगच्छे।

अथ भगवन्तं मरीचिं वेश्यासङ्गादुत्थाय पुनःप्रतिपन्नतपःप्रभाव प्रत्यापन्नदिव्यचक्षुषमुपसंक्रम्य तेनास्म्येवम्भूतत्वदर्शनमवगमितः। सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः तेनैव चारकसुरङ्गापथेन कन्यापुरप्रवेशं भूयोपि मे समपादयत्। समगंसि चाहं शृगालिकामुखविदितवार्त्तानुरक्तया राजदुहित्रा। तेष्वेव दिवसेषु चण्डवर्म्मा सिंहवर्म्मावधूतदुहितृप्रार्थनः कुपिताभियुज्य पुरमवारुणत्। अमर्षणश्चाङ्गराजो यावदरिः पारयामिकं विधिमाचिकीर्षति तावत्स्वयमेव सालं निर्भिद्य प्रत्यासन्नानपि सहायानप्रतीक्षमाणो निर्गत्याभ्यधिकबलेन विद्विषा महति साम्पराये भिन्नवर्म्मा सिंहवर्म्मा बलादगृह्यत। अम्बालिका च बलवदभिगृह्य चण्डवर्म्मणा हठात् परिणेतुमात्मभवनमनीयत कौतुकञ्च स किल क्षपावसाने विवाह इत्यबध्नात्। अहञ्च धनमित्रगृहे तद्दिवाशायैव पिनद्धमङ्गलप्रतिसरस्तमेवमवोचं सखे समापतितमेवाङ्गनाचाभिसरं राजमन्त्रं सुगूढमेव सम्भूय पौरवृद्धैस्तदुपावर्त्तय उपाहृतश्च हस्तगिरसमेव धनुं ग्रहीष्यसीति। तथा च तेनाभ्युपगते गतायुषोऽमुष्य भवनमुत्सवाकुलम् उपसमाधीयमानपरिणयोपकरणम् इतस्ततःप्रवेशनिर्गमप्रसक्तलोकसम्पातम् अथर्व्वशास्त्रिकैः सह प्रविश्य मङ्गलपाठकैः अम्बालिकापाणिपल्लवम् अग्नौ साक्षिण्याथर्वणेन विधिनाग्राहयितुमारभमाणस्य तस्यामितं बाहुदण्डमाकृष्य छुरिकयोरसि प्राहार्षम्। स्फुरतश्च कतिपयानन्यानपि यमविषयमगमयं कृतविभ्रमश्च तत्क्षणमनुचरान् वेपमानमधुरगात्रीं विशाललोचनामभि

निशाम्य तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविशम्। अस्मिन्नेव क्षणे तथास्मि नवाम्बुवाहगम्भीरेण स्वरेणानुगृहीत इति।

श्रुत्वा च स्मित्वा च देवोऽपि राजवाहनः कथमसि कार्कश्येन कर्णीसुतमप्यतिक्रान्तइत्यभिधाय पुनरवेक्ष्योपहारवर्म्माणम् आचक्ष्व तवेदानीमवसरइत्यभाषत।

इति दण्डिनः कृतौ दशकुमारचरिते अपहारवर्म्मचरितं नाम द्वितीय उच्छ्वासः।

---

## तृतीय उच्छ्वासः।

सोऽपि सस्मितं प्रणम्यारभताभिधातुम् देवोऽप्यहमपि पर्यटन्नेकदा गतो विदेहेषु मिथिलामप्रविश्यैव बहिः क्वचिन्मठिकायां विश्रमितुमेत्य कयापि वृद्धतापस्या दत्तपाद्यः कोणमलिन्दभूमाववास्थिषि। तस्यास्तु मद्दर्शनादेव किमपि बहुधारमश्रु प्रावर्त्तत। किमेतदम्ब कथय कारणमिति पृष्टा सकरुणमाचष्ट। जैवातृक ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्म्मा नामासीत्। तस्य खलु मगधराजो राजहंसः परं मित्रमासीत्। तयोश्च वल्लभे बल-शम्बरयोरिव वसुमतीप्रियम्वदे सख्यमप्रतिममधाताम्। अथ प्रथमगर्भाभिनन्दिताश्च प्रियसखीं दिदृक्षुः प्रियम्वदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत्।

अस्मिन्नेव च समये मालवेन मगधराजस्य महत्यजन्यमजनि तत्र लब्धतोऽपि दुर्दशां गतिमगमन्मगधराजः। मैथिलस्तु मालवेन्द्रप्रयत्नप्रापितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्म्मणः सुतैर्विकटवर्म्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य स्वीयात्सुहृत्पतेर्दण्डावयवमादि-

त्महाटवीपथमवगाह्य लुब्धकलुम्पकसर्वस्वोऽभूत्। तत्सुतेन च कनीयसा हस्तवर्त्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि तत्र च मे प्रारूढलतावलीढनिपतितायाः पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत। तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयन्त्रमुक्तः शबरादलिप्सत। भिल्लदारकैः स बालोऽपाहारि। सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वं कुटीरमावेश्य कृपयोपक्रान्तव्रणा स्वस्थीभूय स्वभर्त्तुरन्तिकमुपतिष्ठासुरसहायतया यावद्व्याकुलीभवामि तावन्ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत्।

सा रूपं रुरोद रुदितान्ते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्तृहस्तगमनम् आत्मनश्च केनापि वनचरेण व्रणविरोपणं स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तितायाः निकृष्टजातिसंसर्गवैक्लव्यात्प्रत्याख्यानपारुष्यं तदक्षमेण चामुना विविक्तविपिने स्वशिरःकर्त्तनोद्यमं तेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननम् आत्मनश्चोपयमनमित्यकथयत्। स च पृष्टो मिथिलेन्द्रस्यैव कोऽपि सेवकः कार्यविलम्बी तन्मार्गानुसारी जातः सह तेन भर्त्तुरन्तिकमुपसृत्य पुत्रवृत्तान्तेन शोकमस्य देव्याः प्रियम्वदायाश्चादद्राव। स च राजा दिष्टदोषात् ज्येष्ठपुत्रैश्चिरं विगृह्य पुनरसहिष्णुतयातिमात्रं चिरं प्रयुद्ध्य बद्धः देवी च बन्धनं गमिता। दग्धा पुनरहमस्मिन्नपि वार्द्धके जीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम्। दुहिता तु मम हतजीवितालम्बा विकटवर्म्ममहिषीं कल्पसुन्दरीं किलाशिश्रियत्। तौ चेद्राजपुत्रौ निरुपद्रवावेवावर्द्धिष्येताम् इयता कालेन तवेमां वयोऽवस्थामस्प्रक्ष्येताम्। तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुरिति प्रवृद्धमन्युरभिरुरोद।

श्रुत्वा च तापसीगिरमहमपि प्रवृद्धबाष्पो निगूढमभ्यधां यद्येवं मम समाश्वसिहि। नन्वस्ति कश्चिन्मुनिस्तया तदवस्थया पुत्राभ्युपपादनार्थं याचितस्तेन स सख्यो वर्द्धितश्च। वार्त्तयमसिमहती किमनया

सोऽहमस्मि। शक्यश्च मयासौ विकटवर्म्मा यथाकथञ्चिदुपश्लिष्य व्यापादयितुम्। अनुजाः पुनरतिबहवस्तैरपि घटन्ते पौरजानपदाः मान्तु न कश्चिदिहत्यः ईदृक्तया जनो जानाति। पितरावपि तावन्मामेव न संविदाते किमुतेतरे तदेनमर्थमुपायेन साधयिष्यामी-त्यगादिषम्। सा तु वृद्धा सस्रुदितं परिष्वज्य मुहुः शिरस्युपाघ्राय प्रस्नुतस्तनी सगद्गदमगदत्। वत्स चिरञ्जीव भद्रं तव प्रसन्नोऽद्य भग-वान् विधिः अद्यैव प्रहारवर्म्मण्यपि विदेहा जाताः यतः प्रलम्बमान पीनबाहुर्भवानपारं वत्सशोकसागरमद्योत्तारयितुं स्थितः अहो मह-द्भागधेयं देव्याः प्रियम्वदायाः इति हर्षनिर्भरा स्नानभोजनादिना मामुपाचरत् अशिश्रियञ्चास्मिन्मठैकदेशे निशि कटशय्याम्। अचि-न्तयञ्च विनोपाधिनायमर्थो न साध्यः स्त्रियश्चोपाधीनामुत्तमवलम्बनम्। अतोऽन्तःपुरवृत्तान्तमस्या अवगम्य तद्द्वारेण किञ्चिज्जालमाचरेय-मिति। चिन्तापन्न एव मयि महार्णवोन्मग्नमार्त्तण्डतुरङ्गनिःश्वास-रयावधूतेव व्यावर्त्तत त्रियामा। समुद्रगर्भवासजडीकृत इव मन्द-प्रतापो दिवसकरः प्रादुरासीत्।

उत्थायावसायितदिनमुखनियमविधिस्तां मे मातरमवादिषम्। अम्ब जाल्मस्य विकटवर्म्मणः कच्चिदन्तःपुरवृत्तान्तमभिजानासी-त्यनवसितवचन एव मयि काचिदङ्गना प्रत्यदृश्यत। तां चावेक्ष्य सा मे धात्री हर्षाश्रुकुण्ठकण्ठमाचष्ट। पुत्रि पुष्करिके पश्य भर्तृ-दारकम् अयमसावकृपया मया वने परित्यक्तः पुनरप्येवमागत-इति। सा तु हर्षनिर्भरनिपीडिता चिरं प्ररुद्य बहुविलप्य शान्ता पुनः स्वमात्रा राजान्तःपुरवृत्तान्ताख्याने न्ययुज्यत। उक्तञ्च तया कुमार कामरूपेश्वरस्य कलिन्दवर्म्मनाम्नः कन्या कल्पसुन्दरी कलासु रूपे चाप्सरसोऽप्यतिक्रान्ता पतिमप्यभिभूय वर्त्तते तदेकवल्लभः सतु बह्ववरोधोऽपिविकटवर्म्मेति। तामवोचम् उपसर्पैनां मत्प्रयुक्तैर्गन्ध-माल्यैरुपजनय चासमानदोषनिन्दादिना स्वभर्त्तरि द्वेषम्। अनु-रूपभर्तृगामिनीनाञ्च वासवदत्तादीनां वर्णनेन ग्राहयानुशयम्।

अवरोधान्तरेषु चामुष्य विलसितानि सुगूढान्यपि प्रयत्नेनान्विष्य प्रकाशयन्ती मामनया वर्द्धयेति। पुनरिदमम्बामवोचम् इत्थमे-त्वयाप्यनन्यव्यापारया रूपाजीवासूपस्थातव्या प्रत्यहञ्च यद्यत्त-वृत्तजातं तदखिलं त्वयावबोध्यः मदुक्त्या पुनरियमुदर्कस्वादुर्नोऽस्मत्क-र्मणः प्रसाधनाय छायेवानपायिनी कल्पसुन्दरीमनुवर्त्ततामिति। ते च तमर्थं तथैवान्वतिष्ठताम्।

केषुचिद्दिनेषु गतेषु चाचष्ट मां मदम्बा वत्स माधवीव पिचुमर्द-श्लेषिणी यथासौ ग्राम्यमात्मानं मन्येत तथोपपाद्य स्थापिता किं भूयः कृत्यमिति। पुनरहमभिलिख्यात्मनः प्रतिकृतिमियममुष्यै नेया। नीताञ्चैनां निर्वर्ण्य सा नियतमेवं वक्ष्यति नन्वस्ति कश्चिदीदृशाकारः पुमानिति प्रतिब्रूह्येनां यदि स्यात्ततः किमिति तस्य यदुत्तरं सा दास्यति तदहमस्मि प्रतिबोधनीय इति। सा तथेति राजकुलमुपसंक्रम्य प्रतिनिवृत्ता मामेकान्ते न्यवेदयत् वत्स दर्शितोऽसौ चित्रपटस्तस्यै मत्तकाशिन्यै। चित्रीयमाणा चासौ भुवनमिदं सनाथीकृतं येन देवेऽपि कुसुमधन्वनि नेदृशी वपुःश्रीः सन्निधत्ते चित्रमेतच्चित्रतमं नच तमवैमि य ईदृशमिदमिह लोके निर्मिमीते केनेदमालिखितमित्यादृतवती व्याहृतवती च। मया च स्मेरयोदीरितं देवि सदृशमाज्ञापयसि भगवान् मकरकेतुरेवंसुन्दर इति न शक्यमेव सम्भावयितुम् अथ च विस्तीर्णेयमर्णवनेमिः क्वचिदीदृशमपि रूपं दैवशक्त्या सम्भवेत् अथ तु यद्येवंरूपो रूपानुरूपशिल्पशीलविद्याभिजनाभिजातो युवा महाकुलीनश्च कश्चित्सन्निहितः स्यात् स किं लभ्यत इति। तयोक्तमम्ब किं ब्रवीमि शरीरं हृदयं जीवितमिति सर्वमिदमल्पमनर्हञ्च ततो न किञ्चिल्लभ्यते नचेदयं विप्रलम्भस्तस्यामुष्य दर्शनानुभवेन यथेदं चक्षुश्चरितार्थं भवेत्तथानुग्रहः कार्य इति। भूयोऽपि मया दृढतरीकर्त्तुमुपन्यस्तम् अस्ति कोऽपि राजसूनुरदृष्टचरन् अमुष्य वसन्तोत्सवे सह सखीभिर्नगरोपवनविहारिणी रतिरिव विग्रहिणी यदृच्छया दर्शनपथं गतासि गतश्चासौ कामशरैकलक्ष्यतां मामन्ववर्त्तिष्ट मया

च वामन्योन्यानुरूपैरन्यदुर्लभैराकारादिभिर्गुणातिशयैश्च प्रेर्यमाणया तया तच्चित्तैरिव कुसुमशेखरस्रगनुलेपनादिभिश्चिरमुपासितासि अद्य चासमतेन स्वयमेवाभिलिख्य त्वत्समधिगमाय गाढं त्वद्दर्शनाय प्रेषितम्। एष चेदर्थो निश्चितस्तस्यामुष्यातिमानुषप्रायस्य प्रज्ञाप्रकर्षस्य न किञ्चिद्दुष्करं नाम तमद्यैव दर्शयेयं सङ्केतादेवेहति।

तया तु किञ्चिदिव ध्यात्वा पुनरभिहितम् “अम्ब तव नैतदिदानीं गोप्यतमम् अतः कथयामि। मम तातस्य राज्ञा प्रहारवर्मणा सह महती प्रीतिरासीत्। मातुश्च मे मानवत्याः प्रियवयस्या देवी प्रियम्बदासीत्। ताभ्यां पुनरजातापत्याभ्यामेव कृतः समयोऽभूत् आवयोः पुत्रवत्याः पुत्राय दुहितृमत्या दुहिता देयेति। ततस्तु मां जातां प्रनष्टापत्या प्रियम्बदेति प्रार्थयमानाय विकटवर्मणे दैवाद्दत्तवान्। अयञ्च निष्ठुरः पितृद्वेषी नात्युपपन्नसंस्थानः कामोपचारेषु अलब्धवैचक्षण्यः कलासु काव्यनाटकादिषु मन्दाभिनिवेशः शौर्योन्मादी दुर्विकत्थनोऽनृतवादी अस्थानवर्षी नातिरोचते ममैष भर्त्ता। विशेषतस्त्वेषु वासरेषु यदयमुद्याने मदन्तरङ्गभूतां पुष्करिकामप्युपान्तवर्त्तिनीमनादृत्य मद्यावसक्तापत्रपमत्सरामनात्मज्ञामात्मनाटकीयां रमयन्तिकां नामापत्यनिर्विशेषमस्मत्संवर्द्धिताया अम्बकलतायाः स्वयमवचिताभिः सुमनोभिरलमकार्षीत्। मदुपभुक्तमुक्ते चित्रकूटगर्भवेदिकागते रत्नतल्पे तया सह व्यहार्षीत्। अयोग्यश्च पुमानवज्ञातुश्च मत्तस्त्वमित्युपेक्ष्यते। परलोकभयश्चैहिकेन दुःखेनान्तरितम्। अविषह्यं हि योषितामनङ्गशरनिषङ्गीभूतचेतसामनिष्टजनचिरसंवासयन्त्रणादुःखम्। अतोऽमुना पुत्रेण मामद्योद्यानमाधवीगृहे समागमय। तदालापश्रवणमात्रेणैव हि ममातिमात्रं मनोऽनुरक्तम्। अपि चायमर्थराशिरनेनामुं स्वे पदे प्रतिष्ठाप्य तमेवात्यन्तमुपचर्य जीविष्यामीति।” मयापि तदभ्युपेत्य प्रत्यागतम्। अतःपरं भर्तृदारकः प्रमाणमिति।

ततस्तस्यामेव सन्ध्यायामन्तःपुरसन्निवेशमन्तर्वंशिकपुरुषस्थानानि प्रमदवनप्रदेशानपि विभागेनावगम्य अस्तगिरिशिखरपातक्षुभित शोणितइव शोणीभवति भानुबिम्बे पश्चिमाम्भोधिपयःपातनिर्व्वापित पतङ्गाङ्गारधूमसम्भारइव भरितनभसि तमसि विजृम्भिते परदार परामर्शोन्मुखस्य ममाचार्य्यकमिव कर्त्तुमुत्थिते गुरुपरिग्रहसा क्षिणि यथावसरे क्षपाकरे कल्पसुन्दरीवदनपुण्डरीकेणेव मद्दर्श-नानुरागप्रथमोपनतेन स्मयमानेन चन्द्रमण्डलेन सन्धुक्ष्यमाणतेजसि त्रिभुवनविजिगीषोद्यते देवे पुष्पधन्वनि यथोचितं शयनीयमभजे। अचीचरञ्च सिद्धप्रायएवायमर्थः किन्तु परकलत्रलङ्घनाद्धर्म्मपीड़ा भवेत् साप्यर्थकामयोर्द्वयोरुपलम्भे शास्त्रकारैरनुमतैवेति गुरुजन बन्धमोक्षोपायाभिसन्धिना मया चैष व्यतिक्रमः कृतः। तदपि पापं निर्हृत्य कियत्यापि धर्म्मकलया मां समग्रयेदिति। अपि त्वेतदा-कर्ण्य देवो राजवाहनः सुहृदो वा किं नु वक्ष्यन्तीति चिन्तापराधीन एव निद्रया पराम्हश्ये। अदृश्यत स्वप्ने भगवान् भर्गः आह स्म च "सौम्य उपहारवर्म्मन् मा स्म ते दुर्विकल्पोऽभूत् यतस्त्वमसि मदंशः मज्जटाभारलालनोचिता अमरसरिदसौ वरवर्णिनी तत्र कदाचि-द्गजाननो जलक्रीड़ां कुर्व्वन्नतिव्यगाहत। सा च सपत्नीतनयविप्लुतां विलोड़नामसहमाना तमशपत् एहि मर्त्त्यत्वमिति। सोऽपि अहेतुक शापप्रदानात् क्रुद्धस्तामशपत् यथेह बहुभोग्या तथा प्राप्यापि मानु-ष्यकमनेकसाधारणी भवेति। ततस्तेन प्रतिशप्ता सा विषण्णेव मा मुपसृत्य सगद्गदमगदत् स्वामिन्नहमनवरतभवच्चरणवरिवस्याविधा-यिनी न शापार्हेत्याकर्ण्य कृपाक्रान्तमनसा मयोक्तं प्रिये नास्य शापो ऽन्यथा भवितुमर्हति परं त्वदनुग्रहार्थमहमात्मनोऽंशं द्विधा विभज्य विकटवर्म्मरूपेण मिथिलापतिप्रहारवर्म्मात्मजोपहारवर्म्मात्मना च मर्त्त्यलोकेऽवतरिष्यामि त्वञ्च कामरूपाधिपतेः कलिङ्गवर्म्मनाम्नः कन्या कल्पसुन्दरी नाम भूत्वा आवयोर्मदंशेन विकटवर्म्मणा प्रथम मल्पीयांसमनेहसं सङ्गता पश्चादुपहारवर्म्मणि स्वमूर्त्ताविव लय

मुपगते पुनरुपहारवर्म्माख्यमकं कनीयांसं मदंशमुपलभ्य तेन सार्कं विविधसुखोपभोगमनुभविष्यसि तदवमर्थो भर्थो. भवता भिदा-नुग्रह इति।

प्रतिबुध्य च प्रीतियुक्तस्तदहरपि प्रियासङ्गव्यतिकरादिकर-मेनानैषम्। अन्येद्युरनन्यशरीरमनङ्गो मय्येव इषुवर्षमवर्षत्। अमुष्यश्च ज्योतिष्मतः प्रभामयं सरः। प्रासरच्च तिमिरमयं कर्दमः। कार्द्दमिकनिवसनश्च दृढतरपरिकरः खड्गपाणिरुपसंभृतप्रस्तुतोप-स्कारः स्मरन् मातृदत्तान्यभिज्ञानानि राजमन्दिरपरिखामुदम्भसमुपा-तिष्ठम्। अथोपजातं मातृगृहद्वारे पुष्करिकया प्रथमसन्निधापितां वेणुयष्टिमादाय तया प्लावितया च परिखां स्थापितया च प्राकारमत्य-लङ्घम्। अधिरुह्य पक्वेष्टकाचितेन गोपुरोपरितलाधिरोहेण सोपानपथेन भुवमवातरम्। अवतीर्य च बकुलवीथीमतिक्रम्य चम्पका-वलिवर्त्मना मनागिवोपसृत्योत्तराहि चक्रवाकमिथुनरवम-श्रृणवम्। पुनरुदीच्या पाटलापथेन स्पर्शलभ्यविशालसौधकुड्यो-देशे शरक्षेपमिव गत्वा पुनः प्राच्या पिण्डीभाण्डीरखण्डमण्डितोभय-पार्श्वेन सैकतपथेन किञ्चिदन्तरमतिक्रम्य पुनरवाचीं चूतवीथीमगा-हिषि। ततश्च गहनतरमुदरोपरचितरत्नवेदिकं माधवीलतामण्डप-मीषद्विवृतसमुद्गकोन्मिषितभासा दीपवर्त्या व्यक्तपथम्। प्रविश्य चैक-पार्श्वे फुल्लपुष्पनिरन्तरकुरबकपोतपङ्क्तिभित्तिपरिगतं गर्भगृहम् अ-वनिपतितारक्ताम्भोजाभ्रामयम् अभिनवकुसुमचोरकपुलकलाञ्छितं प्रत्यग्रप्रवालपटलपाटलं कपाटमुद्घाट्य प्राविक्षम्। तत्र चासीद्विस्तीर्णं कुसुमशयनं सुरतोपकरणवस्तुगर्भाश्च कामचिनीपत्रसम्पुटाः दन्त-मयतालवृन्तः सुरभिसलिलभरितश्च भृङ्गारकः समुपविश्य मुहूर्तं विश्रान्तः परिमलमतिशयवन्तमाघ्राशिषम् अश्रौषं च मन्दमन्दं पद-शब्दम्। श्रुत्वैव सङ्केतगृहान्निर्गत्य रक्ताशोकस्कन्धपार्श्वव्यवहिताङ्गः स्थितोऽस्मि। सा च सुभ्रूः सुश्रीमच्चामा प्रविश्योपेत्य तत्र मामदृष्ट्वा बलवदव्यथिष्ट। अजनि च मत्तराजहंसीव कण्ठरागवल्गुगद्गदां गिरं

"अत्यन्तमपि विप्रलब्धा नाथ उपायः प्रार्थितुम् अयि हृदय किमिद
मकार्यं कार्यवदध्यवसाय तदसम्भवे किमेवमुत्ताम्यसि। भगवन् पञ्च
बाण कस्तवापराधः कृतो मया यदेवं दहसि न च भस्मीकरोषीति।"

अथाहमाविर्भूय विवृतदीपभाजनो भामिनि ननु त्वदपराद्धं
भवत्या चित्तजन्मनः यदमुष्य जीवितभूतां रतिमाकृत्या कदर्थितवती
धनुर्यष्टिं भ्रूलताभ्यां भ्रमरमालामयीं ज्यां नीलालकद्युतिभिः अस्त्रा-
ण्यपाङ्गवीक्षितैः महारजनध्वजपटांशुकं दशनच्छदमयूखजालैः प्रथम
सुहृदं मलयमारुतं परिमलपटीयसा निश्वासपवनेन परभृतवलमति
मञ्जुलैः प्रलापैः पुष्पमयीं पताकां भुजयष्टिभ्यां दिग्विजयारम्भपूर्ण
कुम्भमिथुनमुरोजयुगलेन क्रीडासरो नाभिमण्डलेन सन्नाह्यरथमण्डलं
श्रोणिमण्डलेन भवनरत्नतोरणस्तम्भयुगलमूरुयुगलेन लीलाकर्णकिस
लयं चरणतलप्रभाभिः अतः स्थान एव त्वां दुनोति मकरकेतुः।
मां पुनरनपराधमधिकमायासयतीत्ययमेव तस्य दोषः। तत्प्रसीद
सुन्दरि जीवय मां जीवनौषधैरिवापाङ्गैरनङ्गभुजङ्गदष्टमित्याश्लिष्ट
वान् शरीरमस्याः रागावेशपेशलां विशाललोचनाम्। अवसितार्थाश्च
आयस्तचिकुरितच्छायाम् ईषत्स्वेदरेखाक्लेदजर्जरकपोलमूलाम् अन-
र्गल कलप्रलापिनीमकाण्डदशनकरक्षतार्पणव्यतिकराम् अत्यर्थपरि-
श्रथाङ्गीमालामिव लक्षयित्वा मानसीं शारीरीञ्च धारणां शिथिल
यन् आत्मानमपि तथा समानार्थमापादयम्। तत्क्षणविमुक्तसङ्कोचौ
रतावसानिकविधिमनुभवन्तौ चिरपरिचिताविवातिरूढविस्रम्भौ क्षण
मवातिष्ठावहि। पुनरहमुष्णमायतञ्च निश्वस्य किञ्चिद्दीनदृष्टिः
सचकितप्रसारिताभ्यां भुजाभ्यामनतिपीडं परिष्वज्य नातिविशद
मचुम्बिषम्। अश्रुमुखी तु सा यदि प्रयासि नाथ प्रयातं मे जीवितं
नय मामपि न चेद्दासजनो निष्प्रयोजन इत्यञ्जलिमवतंसताम
नैषीत्। अवादिषञ्च ताम् अयि मुग्धे कः सचेतनः स्त्रियमभिकामय-
मानां नाभिनन्दति। यदि मदनुग्रहनिश्चलस्तवाभिसन्धिः आचर
विचारं मदुपदिष्टम्। आदर्शय राज्ञे मत्साहाय्यगर्भं चित्रपटम्

आचक्ष्व च निर्मितमाकृतिः पुरुषसौन्दर्यस्य परमा काष्ठा न वेति । बाढमारूढेति नूनमसौ वक्ष्यति । ब्रूहि भूयो यद्येवम् अस्ति कापि तापसी देशान्तरभ्रमणलब्धप्रागल्भ्या मम च मातृभूता तयेदमालेख्यरूपं पुरस्कृत्याहमुक्ता "सोऽस्ति तादृङ्मन्त्रो येन त्वमुपोषिता पर्वणि विविक्तायां भूमौ पुरोहितैर्हुतभुक्ते सप्तार्चिषि नक्तमेकाकिनी शतं चन्दनसमिधः शतमगुरुसमिधः कर्पूरमुष्टीः पट्टवस्त्राणि च प्रभूतानि हुत्वा भविष्यस्येवमाकृतिः । अथ वादयिष्यसि घण्टां घण्टापुटक्वणिताकृष्टश्च भर्ता भवत्यै सर्वं रहस्यजातमाख्याय निमीलिताक्षो यदि त्वामालिङ्गेत् इयमाकृतिरमुमुपसंक्रामेत् त्वन्तु भविष्यसि यथा पुराकारैव यदि भवत्यै भवत्प्रियाय च एवं रोचेत । नचास्मिन्विधौ विसंवादः शङ्क्य इति" अमुष्येदिदं तवाभिमतं सह सुहृन्मन्त्रिभिरनुजैः पौरजानपदैश्च संमन्त्र्य तेषामप्यनुमते कर्मण्यभिमुखेन स्थेयमिति । स नियतमभ्युपेष्यति पुनरस्यामेव प्रमदवनवाटीस्फाटिकायामाथर्वणिकेन विधिना संज्ञपितपशुनाभिहुत्यमुक्ते हिरण्यरेतसि तद्धूमशमनेन संप्रविष्टेन मया अस्मिन्नेव लतामण्डपे स्थातव्यं त्वं पुनः प्रगाढायां प्रदोषवेलायामावादयिष्यसि घण्टां हत हतकनर्मक्षिता विकटवर्माख्यं धूर्तोऽसि त्वमकृतज्ञ मदनुग्रहलब्धे नापि रूपेण लोकलोचनोत्सवायमानेन अन्यपत्नीरभिरमयिष्यसि । नाहमात्मविनाशाय वेतालोत्थापनमाचरेयमिति । अत्रैवं त्वद्वचः स यद्वदिष्यति तन्मह्यमेकाकिन्युपागत्य निवेदयिष्यसि ततः परमहमेव ज्ञास्यामि मत्पदचिह्नानि चोपवने पुष्करिकया प्रमार्जयेति । सा तथेति शास्त्रोपदेशमिव मदुक्तमादृत्यात्यन्तसुरतरागेव कथं कथमप्यगादन्तःपुरम् । अहमपि यथाप्रवेशं निर्गत्य स्वमेवावासमयासिषम् ।

अथ सा मत्तकाशिनी तथा तमर्थमन्वतिष्ठत् । अतिष्ठच्च तन्मते स दुर्मतिः । अन्यमथ पौरजानपदेष्वेवमकुतायमाना वार्त्ता "राजा किल विकटवर्मा देवीमन्त्रबलेन देवयोग्यं वपुरासादयिष्यति ।

नूनमेष न विप्रलम्भोऽतिरक्ष्यायाः नैव कथा प्रमादस्य सन्निधेवान्तः पुरोपवने आयमर्चिष्यैव सम्पाद्यः क्रियायमर्थः। तथाहि बृहस्पतिप्रतिमबुद्धिभि र्मन्त्रिभिरप्यभ्युपानुमतः। यद्येवं भावि नान्यदतः परमस्ति किञ्चिदद्भुतम् अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति,, प्रवृत्तवत्सु लोकवादेषु प्राप्ते पर्व्वदिवसे प्रगाढायां प्रौढतमसि प्रदोषवेलायामन्तःपुरोद्यानादुदैरत धूर्जटिकण्ठधूम्रो धूपोद्गमः क्षीराज्यदधितिलगौरसर्षपवसामांसरुधिराहुतीनाञ्च परिमलः पवनानुसारी च दिशि दिशि प्रावासीत्।

प्रशान्ते च सहसा धूमोद्गमे तस्मिन्नहमविशं निशान्तोद्यान मानमच्च गजगामिनी। आलिङ्ग्य च मां सस्मितं समभ्यधत्त धूर्त्त सिद्धं ते समीहितम् अवसितश्च पशुरसौ। अमुष्य चोपप्रलोभनाय त्वदादिष्टया दिशा मयोक्तं कितव न साधयामि ते सौन्दर्य्यम् एवं सुन्दरोऽपि त्वमप्सरसामपि स्पृहणीयो भविष्यसि किमुत मानुषीणां मधुकरस्य निसर्गचापलात् यत्र क्वचिदासक्तिर्भवादृशो ध्वांस इति। तेन तु मे पादयोर्निपत्याभिहितं रम्भोरु सहस्व मत्कृतानि दुश्चरितानि मनसापि न चिन्तयेयमितः परमितरनारीः त्वरस्व प्रकृते कर्म्मणीति। तदहमीदृशेन कैवाहिकेन नेपथ्येन समभिरक्त-वती। मामपि रागाभिसाधितमनस्केन "गुरुणा दत्तैव तुभ्यमेषा जाया पुनरपीमं जातवेदसं साक्षीकृत्य स्वहृदयेन दत्तेति। प्रपदेन चरणपृष्ठे निष्पीड्योत्क्षिप्तपादपार्ष्णिः इतरेतरव्यतिषक्तकोमलाङ्गुलिदलेन भुजलतायुगलेन कन्धरां समावेष्ट्य सलीलमानमय्य स्वयमुन्नमितमुखकमला बिम्बाधरविन्यस्तदृष्टिरसकृदभ्यचुम्बत्।

अथैनाम् इत्थैव कुसुमगर्भे तिष्ठ यावदहं निर्गत्य साधयेयं साध्यं सम्यगिति विसृज्य तामुपसृत्य होमानलप्रदेशमशोकशाखाव-लम्बिनीं घण्टामचालयम्। अनुजव सा तं जनं लतान्तदूतीवाक्र-मन्ती। प्रावर्त्तिषि चाहमनुबन्धनप्रमुखानि होतुम् आयासीच्च राजा यथोक्तं देशम्। प्रज्ञापन्नमिव किञ्चित्सविस्मयं विधार्य्य तिष्ठन्त

वत्स न सुभिक्षाः साम्प्रतं पौराः ते दुःखमोहोपहता व्यक्तात्मानो राष्ट्रं नः सुभिक्षमभिद्रवेयुः। अतो मुष्टिवधः सस्यवधो वा यदा त्यज्यते तदाभियास्यसि नाद्य यात्रा युक्तेति। नगरवृद्धावप्यलापिषम् अस्तीयता मूल्येन महार्घं वस्तु मास्तु मे लभ्यं धर्म्मरक्षायै तदनुगुणेनैव मूल्येनादः क्रीयतामिति। अतश्चलिङ्ग राष्ट्रमुख्यमाक्रम्याख्यातवान् योऽसावनन्तसीरः प्रहारवर्म्मणः पुत्र इति निनाशयिषितः सोऽपि पितरि मे प्रशान्तिस्थे किमिति नाख्येत तत्त्वयापि तस्मिन् संरम्भो न कार्य्य इति।

तदिमे सर्व्वमाभिज्ञानिकमुपलभ्य सत्यमयमिति निश्चिन्वाना विस्मयमानाश्च मां महादेवीव प्रशंसन्तो मन्त्रबलानि चोद्घोषयन्तो बन्धनात्पितरौ निष्क्रमय्य राज्यं प्रत्यपादयन्। अहञ्च तया मे धात्र्या सर्व्वमिदं समाचेष्टितं रहसि पित्रोरवगमय्य प्रहर्षकाष्ठाधिरूढयोस्तयोः पादमूलमभजे। अभव्ये च यौवराज्यलक्ष्म्या तदनुज्ञया प्रसाधितात्मा देवपादविरहदुःखदुर्मनाः भोगान्निर्व्विशन् भूयोऽस्य पितृसखस्य सिंहवर्म्मणो लेख्याच्चण्डवर्म्मणस्तस्याभियोगमवगम्य प्रभुवधाभिचरणात् चोभयमपि करणीयमेवेत्यलघुना लघु समुत्थानेन सैन्यचक्रेणाभ्यसरम् अभूवञ्च भूमिवल्लभादलक्ष्मीसाक्षात् क्रियामहोत्सवानन्दराशेरिति।

श्रुत्वैतद्देवो राजवाहनः सस्मितमवादीत् पश्यत पारतल्पिकमुपधियुक्तमपि गुरुजनबन्धव्यसनमुक्तिहेतुतया दुष्टामित्रप्रमापणाभ्युपायतया राज्योपलब्धिमूलतया च पुष्कलावर्थधर्म्मावप्यरीरधत्। किं हि बुद्धिमद्भिः प्रयुक्तं नाभ्युपैति शोभाम् इत्यर्थपालमुखे निधाय स्निग्धदीर्घां दृष्टिम् आचष्टां भवानात्मीयचरितमित्यादिदेश।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उपहारवर्म्मचरितं नाम तृतीय उच्छ्वासः।

## चतुर्थ उच्छ्वासः ।

## अर्थपाल चरितम् ।

सोऽपि बद्धाञ्जलिरभिदधे देव सोऽहमप्येभिरेव सुहृद्भिरेककर्म्मा उर्म्मिमालिनेमिभूमिवलयं परिभ्रमन्नुपासरं कदाचित् काशिपुरीं वाराणसीम् उपस्पृश्य मणिभङ्गनिर्म्मलाम्भसि मणिकर्णिकायाम् अविमुक्तेश्वरं भगवन्तमन्धकमथनमभिप्रणम्य प्रदक्षिणं परिभ्रमन् पुरुषमेकमायामवन्तमायसपरिघपीवराभ्यां भुजाभ्यामाबध्यमानपरिकरमनवरतरुदितोच्छूनताम्रदृष्टिमद्राक्षम् । अतर्कयञ्च कर्कशोऽयं पुरुषः कार्पण्यमिव वर्षति मामतारं चक्षुः आरम्भश्च साहसानुवादी नूनमसौ प्राणनिस्पृहः किमपि कष्टं प्रियजनव्यसनमूलं प्रपित्सते तत् पृच्छेयमेनम् अस्ति चेत् ममापि कोपि साहाय्यावकाशस्तमेनमभ्युपपद्य इति अपृच्छं भद्र समारम्भोऽयं साहसमवगमयति नचेद्गोप्यमिच्छामि श्रोतुं शोकहेतुमिति । स मां सबहुमानं निर्वर्ण्य को दोषः श्रूयतामिति क्वचित् करवीरतले मया सह निषण्णः कथामकार्षीत् ।

महाभाग सोऽहमस्मि पूर्व्वेषु कामचरः पूर्णभद्रो नाम गृहपतिपुत्रः प्रयत्नसंवर्द्धितोपि पित्रा दैवच्छन्दानुवर्त्ती चौर्य्यवृत्तिरासम् । अथास्यां काशीपुर्य्यामर्थवर्य्यस्य कस्यचित् गृहे चोरयित्वा रूपाभिव्याहितो बद्धः । वद्धे च मयि मत्तहस्ती मृत्युविजयोनाम हिंसाविहारी राजगोपुरोपरितलाधिरूढस्य पश्यतः कामपालनाम्नः उत्तमामात्यस्य शासनाज्जनकण्ठरवविमुक्तघट्टारवो मम-

चितरक्तकाक्षः समभ्यधावत्। अभिपत्य च मया निर्भयेन निर्भ-
र्त्सितः परिभ्रमन् दारुखण्डसुषिरानुप्रविष्टोऽभयभुजङ्गचक्रघटित
मतिमानो भीतवज्रवर्षिष्ट। भूयश्च तेषां जातसंरम्भेण निकाम-
दारुणैर्मामङ्कुशप्रहारैरभिमुखोऽक्रियत। मयापि विमुक्तावद्धमन्युना
निर्भर्त्सिताभिहतो निहत्यापाक्रमत्। अथ मया निपत्य सरभसमा
क्रुष्टो दुष्ट यन्ता कुत्र यातोऽसि कुञ्जरापसदेति निशितेन वार-
णेन वारणं मुहुर्मुहुरभिघ्नन् नियन्तृभावे कथमपि मदभिमुखम-
करोत्। यथायोधम् अपसरतु विरदकीटएषः अन्यः कश्चिन्मातङ्ग
पतिरानीयतां येनाहं मुहूर्तं विहृत्य गच्छामि गन्तव्यां गतिमिति।
दृष्ट्वैव स मां वक्रमुद्धृत्यान्तमुत्क्रान्तनियन्तृनिष्ठुराङ्कुशः पलायिष्ट।
मन्त्रिणा पुनरहमाहूयाभ्यभाषिषि भद्र वस्तुरेवैष वस्तुविजयो
नाम हिंसाविहारी सोऽयमपि तावत्त्वयैवं कृतः तदिदम कर्म्मणो-
ऽत्यन्तमलीमसात् किमत्रमसि प्रपद्यास्मान्मार्गं त्वया वर्त्तितुमिति।
मया चापितोऽस्मीति विज्ञापितोऽयं मया मित्रवन्मध्यवर्त्तिष्ट।
एतच्च मयैतदा रक्षितं जातविस्रम्भेणाभाषत स्वचरितम्।

आसीत् कुसुमपुरे राज्ञोऽरिपुञ्जयस्य मन्त्री धर्म्मपालो नाम
विश्रुतधीः श्रुतर्षिः अमुष्य पुत्रः सुमित्रो नाम पित्रैव समः प्रज्ञागुणेषु
तस्यास्मि द्वैमातुरः कनीयान् भ्राताहम्। वेश्यासु विलसन्तं मामसौ
विनयवर्त्मन्यवारयत्। अवार्थं दुर्नयवासनमपहाय दिक्षु खेदं भ्रमन्
यदृच्छयास्यां वाराणस्यां प्रमदवने मदनाराधनाय निर्गत्य सह सखी-
भिः कन्दुकेनानुक्रीडमानां काशीभर्तुश्चण्डसिंहस्य कन्यां कान्ति
मतीं नाम अकामे कथमपि समगच्छे च। अथ कन्या विहरता
कुमारीपुरे सा मयासीदापन्नसत्त्वा कञ्चित्सुतञ्च सूतवती। मृतजात
इति सोऽपविद्धोरहस्यनिर्भेदभयात्परिजनेन क्रीडाशैले शवर्या च
श्मशानं नीतः। तयैव विवर्त्तमानया निशीथे राजदौवारिक
पुरुषैरभिगम्य तर्जितया वक्षःपात्यभीतया निर्भिन्नं रहस्यम्।
राजाथवा निशीथे अहमाक्रीडगिरिदरीगृहे विश्रब्धप्रसुप्तकयोप-

दर्शितावयवोपपन्नरज्जुबन्धः श्मशानमुपनीय मातङ्गहस्तेन कृपाणेन प्राजिहीर्ष्ये। नियतिबलान्नूनमन्यधर्मसमाविष्टान्त्यजं तम् चण्डालं कांचित्प्रत्यापासरम्। अपरश्च अमन्नठ्याम् एकदाभिमुख्या कयापि दिव्याकारया सपरिवारया कन्ययोपास्थायि। सा मामञ्जलिकिसलययोर्लसितेन मुखविलोलकुन्तलेन मूर्ध्ना प्रणम्य मया सह वनवटद्रुमस्य कस्यापि मूलतः प्रच्छायशीतले तले निषसाद। कासि वास कुतोऽस्यागता कस्य हेतोरस्य मे प्रसीदसीति साभिलाषमाभाषिता मया वाक्यं मधुवर्षमवर्षत्।

आर्य नाथस्य यक्षाणां माणिभद्रस्यास्मि दुहिता तारावली नाम। साहं कदाचिदगस्त्यपत्नीं लोपामुद्रां नमस्कृत्यावर्त्तमाना मलयगिरेः परेतावासे वाराणस्याः कमपि दारकं रुदन्तमद्राक्षम्। आदाय चैनं तीव्रस्नेहान्मम पित्रोः सन्निधिमनैषम्। अनैषीच मे तातो देवस्यालकेश्वरस्यास्थानीम्। अथाहमाज्ञयात्मना धनदसखेन वत्से बालेऽस्मिन् कीदृशस्ते भाव इति औरस इवास्मिन् वत्स वत्सलतेति मया विज्ञापितः सत्यमाह वराकीति तन्नामतिमहतीं कथामकरोत्। तच्चैतावन्मयावगतं त्वं किल शौनकः शूद्रकः कामपालश्चाभिन्नः। बन्धुमती विनयवती कान्तिमती चाभिन्ना। वेदिमती यज्ञदासी सोमदेवी चैकैव। हंसावली शूरसेना सुलोचना चानन्या। नन्दिनी रङ्गपताका इन्द्रसेना चाद्यभूता। या किल शौनकावस्थायामभिसारिकमातत्सात्कृता गोपकन्या सैव किलार्यदासी पुनश्चाद्य तारावलीत्यभूवम्। बालश्च किल शूद्रकावस्थे त्वयि आर्यदास्यवस्थायां मत्तोऽभूत्। अवरंत्र च विनयवत्या यो बालमवा स तु तस्यां कान्तिमत्यवस्थायामसावभूत्। एवमनेकजन्मसुखपरिभ्रष्टं दैवान्मयोपपन्नं तमपि पित्रादेशात् मम तपस्यतो राजहंसस्य देव्यै वसुमत्यै तनुजस्य भाविचक्रवर्त्तिनो राजवाहनस्य परिचर्यार्थं समर्प्य गुरुभिरभ्यनुज्ञाता कृतान्तयोगात् कृतान्तमुखपरिभ्रष्टस्य ते पादपद्मशुश्रूषार्थमागतास्मीति।

मश्रावत् । एषु किल दिवसेष्वयथापूर्वमागतो कान्तिमत्याः समुप-
लभ्य राजमहिषी सुलक्षणा नाम सप्रणयमपृच्छत् । देवि नाहमा-
यथातथ्येन विप्रलम्भनीया कथय तथ्यं केनेदमायथापूर्व्यमागमनार-
विन्दे तवेषु वासरेष्विति । सा त्ववादीत् भद्रे स्मरसि किम् यद्यपि
यायथातथ्येन किञ्चिन्मयोक्तपूर्व्वम् । असौ मे तारावली सपत्नी च
किमपि कलुषिताशया रहसि भर्त्रा मद्रोषापदिष्टा प्रणयमप्युपेक्ष्य
प्रणम्यमानाप्यत्याभिरूपोढमत्सरा प्रावसत् अवसीदति च नः पति-
रतो मे दौर्मनस्यमिति । तत्रायैवैकान्ते सुलक्षणया कान्ताय
कथितम् । अथासौ निर्भयोऽस्य प्रियतमाविरहपाण्डुभिरवयवैर्व्य-
स्तम्भिताश्रुपर्य्याकुलेन चक्षुषा उष्णश्वासशोषिताभिरिव नातिपेश-
लाभिर्वाग्भिर्वियोगं दर्शयन् कथमपि राजकुले कार्य्याणि कारयन्
पूर्व्वसङ्केतितैः पुरुषैरभियाच्यमानमन्वयत् । तस्य किल स्थानस्थानेषु
दोषानुद्धोष्य तथोद्धरणीये चक्षुषी यथा तन्मूलमेवास्य मरणं
भवेदिति । अतोऽद्यैकान्ते यथेष्टमस्तु मुक्ता तस्य साधोः पुरः प्राणा-
न्मोक्तुकामो बध्नामि परिकरमिति ।

मयापि तत् पितृव्यसनमाकर्ण्य पर्य्यश्रुणा सोऽभिहितः सौम्य
किं तव गोपायित्वा यस्यास्य सुतो यस्य कन्यका देवस्य राजवाहनस्य
पादशुश्रूषार्थं देव्या वसुमत्या हस्ते न्यासः कृतः सोऽहमपि शक्नोमि
सहस्रमपि सुभटानामुदायुधानां हत्वा पितरं मोचयितुम् अपि तु
सङ्कुले यदि क्षतिरस्यात्तदेतदङ्गे प्रक्षिप्ता सर्व्वमेव मे यत्नो भस्मनि
हुतमिव भवेदिति ।

अनवसितवचनएव मयि महानाशीविषः प्राकाररन्ध्रोदरेव-
च्चिरः । तमहं मन्त्रौषधबलेनाभिगृह्य पूर्व्वमन्त्रमनुवन् भद्र किं
नः समीहितम् अनेन तातमप्यहमायः सङ्घे यदृच्छया पातितेन
नाम दंशयित्वा तथा विषं स्तम्भयेयं यथा मृतइत्युदास्येत । त्वया तु
मुक्तसाध्वसेन माता मे बोधयितव्या यो यस्या वने देव्या वसुमत्या
हस्तार्पितो युष्मत्सूनुः सोऽनुप्राप्तः पितुरवस्थां मत्तउपलभ्य बुद्धि

नचिरादित्थमाचरिष्यति। त्वया तु मुक्तपाशया राज्ञे प्रेषणीयम् एष खलु क्षत्रधर्मः यद्बन्धुर्बन्धुर्वा दुष्टः स निरपेक्षं निग्राह्य इति। स्त्रीधर्मश्चैषः यददुष्टस्य दुष्टस्य वा भर्तुर्गतिर्भर्तव्येति। तदहमनेनैव सह चिताग्निमारोक्ष्यामि अभिजनानुरूपः पश्चिमो विधिरनुष्ठातव्य इति। एवं निवेदिते नियतमनुष्ठास्यति। ततः स्वमेवागारमानीय काष्ठपटपरिच्छिन्ने विविक्तोद्देशे दर्भसंस्तरमधिशय्य स्वयं कृतानुमरणमङ्गलया त्वया च तत्र सन्निवेष्टम्। अहञ्च बाह्यकक्षामतन्द्रया प्रवेक्ष्यामि। ततः पितरमुज्जीव्य तदभिलषितेनाभ्युपायेन चेष्टिष्यामहे इति।

स तथेति हृष्टतरस्तूर्णमगमत्। अहन्तु घोषस्थाने चिरा दृष्टं घनतरविपुलच्छायमाश्रित्य गूढतनुरतिष्ठम्। आरूढाश्च लोका यथाविषयमुच्चैः स्थानानि उच्चावचप्रलापाः प्रस्तुताः। तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजमुद्धुरध्वनिमच्छागजनानुयातमानीय मदभ्यास एव स्थापयित्वा मातङ्गः स्थिरघोषयत्। "एष मन्त्री कामपालो राज्यलोभात् भर्तारं चण्डसिंहं युवराजं चण्डघोषञ्च विषान्नेनोपांशु हत्वा पुनर्देवोऽपि सिंहघोषः पूर्वैवानहत्यमुष्मिन् पापमाचरिष्यन्विश्वासादरहस्यभूमौ पुनरमात्यं शिवनागमाहूय स्थूणमङ्गारवर्षं च राजवधायोपजप्य तौ स्वामिभक्त्या विकृतगुह्यः राज्यकामुकस्यास्य ग्रामगस्याध्यान्धतमसप्रवेश्यो न्याय्य इति प्राड्विवाकवाक्याद्दण्ड्यदरक्षाय नीयते। पुनरन्योऽपि यदि स्यादन्यायवृत्तिस्तमप्येवमेव यथार्हेण दण्डेन योजयिष्यति देवइति।,, श्रुत्वैतद्वध्यकालकाले मया जने पितुरङ्के प्रदीप्तशिरसमाशीविषं व्यक्षिपम्। अहञ्च भीतो नामापक्रम्य तत्रैव जनानुवर्तिनः क्षुद्रव्याघदष्टस्य तातस्य विषहृतजीवरक्षो विषं क्षणात्स्तम्भयम्। अपतच्च स भूमौ हृतकाल्यः प्राणपण्य सत्यमिदं राजावमानिनं दैवोदण्ड एव स्पृशतीति वदन्तश्चाभ्यां विना चण्डनिपतिना चिरधर्षितः प्राणैरेव वियोजितोऽविधिनेति। मदुक्तश्च

व्ययमजनिष्ट। जनयितापि मे नरकादिव स्वर्गं तादृशाद्व्यसनात्तथाभूतमभ्युदयमारूढः पूर्णभद्रेण विस्तरेण यथावृत्तान्तमावेदितो भगवतो मघवतोपि भाग्यवन्तमात्मानमजीगणत्। मनागिव च मत्सम्बन्धमाख्याय हर्षविस्मितात्मनः पित्रेऽकथयम् आज्ञापयत कात्र नः प्रतिपत्तिरिति। पिता मे प्राब्रवीत् वत्स गृहमेवेदमस्मदीयमतिविशालमशालवत्त्रयमस्त्यायुधग्रामम् अलङ्घ्यतमा च गुप्तिः उपहृताश्च मयातिबहवः सन्ति सामन्ताः प्रकृतयश्च भूयस्यो न मे व्यसनमनुरुध्यन्ते सुभटानाञ्चानेकसहस्रमस्त्येव ससुहृत्पुत्रदारम्। अतोऽत्रैव कतिपयान्यहानि स्थित्वा बाह्याभ्यन्तरकोपानुत्पादयिष्यामः। कुपितांश्चोपसंगृह्य पोत्साह्य प्रकृत्यमित्रान् उत्थाप्य सहजांश्च द्विषो दुर्दान्तमेनमुच्छेत्स्यामइति। कोदोष स्तथास्त्विति तातस्य मतमन्वमंसि।

तथास्मासु प्रतिविधाय तिष्ठत्सु राजापि विज्ञापितोदन्तो जातानुतापः पारग्रामिकान् प्रयोगान् प्रायः प्रायुंक्त ते चास्माभिः प्रत्यहमहन्यन्त। अस्मिन्नेवावसरे पूर्णभद्रमुखाच्च राज्ञः शय्यास्थानमवगम्य तदैव स्वोदवसितभित्तिकोणादारभ्य उरगास्येन सुरङ्गामकार्षम्। गता च सा भूमिस्वर्गकल्पमनल्पकन्यकाजनं कमप्युद्देशम्। अव्यथिष्ट च दृष्ट्वैव स मां नारीजनः। तत्र काचिदिन्दुलेखेव स्वलावण्येन रसातलान्धकारं निह्नुवाना भूमिरिव विग्रहिणी भगवतः कुसुमधन्वनो राजलक्ष्मीरिवानेककुन्दपतिदर्शनपरिहाराय महीविवरं प्रविष्टा निष्टप्तकनकपुत्रिकेवावदातकान्तिः कन्यका चन्दनलतेव मलयमारुतेन मद्दर्शनेनोदकम्पत। तथाभूते च तस्मिन्नङ्गनासमाजे कुसुमितेव काशयष्टिः पाण्डुशिरसिजा स्थविरा काचिच्चरणयोर्मे निपत्य सास्रदीनमब्रूत दीयतामभयदानमस्मै अनन्यशरणाय स्त्रीजनाय किमसि देवकुमारो दनुजयुद्धश्रद्धया रसातलं विविक्षुः आज्ञापय कोऽसि कस्य हेतोरागतोऽसीति। सा तु मया प्रत्यवादि माम्ब भवत्यो भैषुः। अहमस्मि द्विजातिवृषभात्काम

पालाद्देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो नाम सत्यर्थं निजगृहान्नृपगृहं सुरङ्गयोपसरन्निहान्तरे वो दृष्टवान् कथयत काः स्थ यूयं कथमिह निवसथेति ।

सोदञ्जलिरुदीरितवती भर्तृदारक भाग्यवत्योवयं यास्त्वामेभिरेव चक्षुर्भिरनघमद्राक्ष्म । श्रूयतां यस्तव मातामहश्चण्डसिंहः तेनास्यां देव्यां लीलावत्यां चण्डघोषः कान्तिमतीत्यपत्यद्वयमुदपादि । चण्डघोषस्तु युवराजोऽत्यासङ्गादङ्गनासु राजयक्ष्मणा सुरक्षयमगात् अन्तर्वत्न्यां देव्यामाचारवत्याम् । अमुया चेयं मणिकर्णिका नाम कन्या प्रसूता । अथ प्रसववेदनया मुक्तजीविताचारवती पत्युरन्तिकमगमत् । अथ देवश्चण्डसिंहो मामाङ्कयोपह्वरे समाज्ञापयत् ऋद्धिमति कन्यकेयं कल्याणलक्षणा तामिमां मालवेन्द्रनन्दनाय दर्पसाराय वर्धयित्वा दित्सामि बिभेमि च कान्तिमतीवृत्तान्तादारभ्य कन्यकानां प्रकाशावस्थापनात् अतश्चयमरातिव्यसनाय कारिते महति भूमिगृहे हरिमणिप्रसवगर्भात्मीयांनानामयूखपरिक्षागृहे प्रचुरपरिवर्हया भवत्या संवर्ध्यताम् यस्याम् भोग्यवस्तु वर्षशतेनाप्यक्षय्यमिति । स तथोक्त्वा निजवासगृहस्याङ्गणभित्तावर्धं पादं किञ्चिद्विष्कम्भमुद्धृत्य तेनैव द्वारेण स्थानमिदमस्मानवीविशत् । इह च नो वसन्तीनां द्वादश समाः समत्ययुः । इयञ्च वत्सा तरुणीभूता न चाद्यापि स्मरति राजा काममियं पितामहेन दर्पसाराय सङ्कल्पिता त्वदम्बया कान्तिमत्या चेयं गर्भस्थैव द्यूतजिता समाख्या तवैव जायात्वेन समकल्प्यत तदत्र प्राप्तरूपं चिन्त्यतां कुमारेणैवेति । तां पुनरवोचम् अद्यैव राजगृहे किमपि कार्यं साधयित्वा प्रतिनिवृत्तो युष्मासु यथार्हं प्रतिपत्स्ये इति । तेनैव दीपदर्शितबिलपथेन गत्वा स्थितेऽर्धरात्रे तदर्धपादं प्रत्युद्धृत्य वासगृहं प्रविष्टो विस्रब्धसुप्तं सिंहघोषं जीवग्राहमग्रहीषम् । आकृष्य च तमहिमिवाहिशत्रुः स्फुरन्तं मरुनेव भित्तिरन्ध्रपथेन स्वावाससन्निधिमनैषम् । आनीय च स्वभवनम् आयस-

निगडसन्दानितचरणयुगलमवनमितमलिनवदनमश्रुवर्षक्लिन्नचक्षुषमेकान्ते जनयित्रोः समदर्शयम्। अकथयञ्च विलक्षयाम्।

अथ पितरौ प्रहृष्टतरौ तं निकृष्टाशयं निशाम्य बन्धने नियम्य तस्या दारिकायाः यथार्हेण कर्म्मणा मां पाणिमग्राहयेताम्। अनपत्यतया तद्राज्यमस्मदायत्तमेव जातं प्रकृतिकोपभयात्तु मन्मात्रा मुमुक्षितोऽपि न मुक्तएव सिंहघोषः। तथास्थिताश्च वयम् अङ्गराजः सिंहवर्म्मा देवपादानां भक्तिमान् छतवर्म्मा चेति अमित्राभियुक्तमेनमभ्यसराम अभूवञ्च भवत्पादपङ्कजरजोऽनुग्राह्याः। स चेदानीं भवच्चरणप्रणामप्रायश्चित्तमनुतिष्ठतु सर्व्वंदुश्चरितक्षालनमनार्य्यः सिंहघोष इति अर्थपालः प्राञ्जलिः प्रणनाम।

देवोऽपि राजवाहनो बहु पराक्रान्तं वत्सयुक्ता च बुद्धि मुंच्य बन्धात्ते श्वशुरः पश्यतु मामित्यभिधाय भूयः प्रणतिमेव प्रयच्छन् प्रीतिस्मेरः प्रस्तूयतां तावदात्मीयं चरितमित्याख्यापयत्।

इति दण्डिनः कृतौ दशकुमारचरिते अर्थपालचरितं नाम
चतुर्थ उच्छ्वासः।

## सप्तम उच्छ्वासः।

---

## मन्त्रगुप्तचरितम्।

राजाधिराजनन्दन नगरन्ध्रगतस्य ते गतिं ज्ञास्यन्नहमपि गतः कदाचित्कलिङ्गान्। कलिङ्गनगरस्य नात्यासन्नसंस्थितजनदाहस्थानसंसक्तस्य कस्यचित्कान्तारधरणिजस्याकीर्णसरसकिसलयसंस्तरे तले निषद्य निद्रालीढदृष्टिरशयिषि। गलति च कालरात्रिशिखण्डजालकान्धकारे चरितरक्षसि स्खलितनीहारे निभृतनिलयनिलीननिःशेषजने नितान्तभीते निशीथे घनतरशाखिशाखान्तरालनिष्ठुरादिनि नेत्रनिर्मीलिनीं निद्रां निगृह्णन् कर्णदेशं गतं “कथं खलेनानेन दग्धसिद्धेन रिरंसाकाले निदेशं दित्सता जनस्य रागेणानर्गलेनार्दित इत्थं खलीकृतः क्रियेतास्यानकनरेन्द्रस्य केनचिदनन्तशक्तिना सिद्ध्यन्तराय इति” किङ्करस्य किङ्कर्याश्चातिकातरं रटितम् आकर्ण्य कएष सिद्धः का च सिद्धिः किमनेन किङ्करेण करिष्यत इति दिदृक्षाक्रान्तहृदयः किङ्करगतया दिशा किञ्चिदन्तरं गतः तरलतरनरास्थिशकलरचितालङ्कारकान्तकायं दहनदग्धकाष्ठनिष्ठाङ्गाररजःकृताङ्गरागं तडिल्लताकारजटाधरं हिरण्यरेतस्यरण्यचक्रान्धकारराक्षसे चयगृहीतनानेन्धनग्रासचञ्चदर्चिषि दक्षिणेतरेण करेण तिलसिद्धार्थकादीन्निरन्तरचटचटायितानाकिरन्तं कञ्चिदद्राक्षम्। तस्याग्रे स कृताञ्जलिः किङ्करः किं करणीयं

दीयतां निदेश इत्यतिष्ठत्। आदिष्टश्चायं तेनातिनिष्ठुराशयेन गच्छ कलिङ्गराजस्य कर्दनस्य कन्यां कनकलेखां कन्यागृहादिहानयेति। स च तथाकार्षीत्। ततश्चैनां त्रासेनालघीयसा सज्जर्जरेण च कण्ठेन रक्तनिकागृहीतेन च हृदयेन हा तात हा जननि इति क्रन्दन्तीं कीर्णम्लानशेखरस्रजि शीर्णनहने शिरसि जातां सक्रये निगृह्यासिना शिताशितेन शिरश्चिकर्त्तिषयाचेष्टत। झटिति चाच्छिद्य तस्य हस्तात्तां शक्तिकां तथा निकृत्य तस्य तच्छिरः सजटाजालं निकटस्थस्य कस्यचित् जीर्णसालस्य स्कन्धरन्ध्रे न्यदधम्। तन्निध्याय हृष्टतरः स राक्षसः क्षीणाधिरकथयत् आर्य्य कदर्थ्यस्यास्य कदर्थनाच्च कदाचिन्निद्रायाति नैनं तर्जयति त्रासयति चाकृत्ये चाज्ञां ददाति तदनेन कल्याणराशिना साधीयः कृतं यदेष नरकाकः कारणानां नारकीणां रसज्ञानाय नीतः शीततरदीधितिदेहजस्य नगरं तदनु दयानिधेरनन्ततेजसस्तेऽयं जनः काञ्चिदाज्ञां चिकीर्षति आदिशास्य कालहरणेनेत्यगंसीत्। आदिशञ्च तं सखे सैषा सज्जनाचरिता सरणिः यदणीयसि कारणेऽनणीयानादरः संदृश्यते। नचेदिदं नेच्छसि सेयं सन्नताङ्गयष्टिरक्लेशार्हा सत्यनेनाकृत्यकारिणात्यर्थं क्लेशिता तन्नयैनां निजनिलयं नान्यदितः किञ्चिदस्ति चित्ताराधनं न इति।

अथ तदाकर्ण्य कर्णशेखरनीलनीरजायितां धीरेतरतारकां दृशं तिर्य्यक् किञ्चिदञ्चितां सञ्चारयन्ती सलिलचरकेतनशरासनानतां चिल्लिकालतां ललाटरङ्गस्थलीलास्यनर्त्तकीं लीलालसं लासयन्ती कण्टकितरक्तगण्डरेखा रागलज्जान्तरालचारिणी चरणाग्रेण तिरश्चीननखार्चिश्चन्द्रिकेण धरणीतलं साचीकृताननसरसिजं लिखन्ती दन्तच्छदकिशलयलङ्घिना हर्षोच्छ्वाससलिलधाराशीकरकणजालसंक्लेदितस्य स्तनतटचन्दनस्यार्द्रतां निरस्यता आस्यान्तरालनिःसृतेनातनीयसानिलेन हृदयलक्ष्यदलनदक्षरतिसहचरसायकस्य दयितेन तरङ्गितदशनचन्द्रिकाणि कानि चिदेतान्यक्षराणि कलकण्ठी-

कलान्यस्तजत् । आर्य्य केन कारणेनैनं दासजनं कालहस्तादाच्छिद्या नन्तरं रागानिलचालितरणरणिकातरङ्गिण्यनङ्गसागरे क्षिपसि । यथा ते चरणसरसिजरजःकणिका तथाहं चिन्तनीया यद्यस्ति दया तेऽत्र जने अनन्यसाधारणः करणीयः स एष चरणाराधन क्रियायाम् यदि च कन्यागाराध्यासने रहस्यचरणादनर्थं आश-ङ्केथ नैतदस्ति रक्षतरा हि नक्तम् सख्यस्तथाच यथा न कश्चिदेतत् ज्ञास्यति तथा यतिष्यन्त इति । स चाहं देवजेनाकर्णाकृष्टसायका-सनेन चेतस्यतिनिर्दयं ताडितस्तत्कटाक्षकालायसनिगडगाढसंयतः किङ्करानननिक्षिप्तहृदयिरणादिषम् यथेयं रथचरणजघना कथ-यति तथाचेन्नाचरेयं नयेत मकरकेतनः क्षयेनैकेनाकीर्त्तनीयां दशां अनयैनं सह नयानया कन्यया कन्यास्य हरिणनयनयेति । नीत-श्चाहं निशाचरेण शारदजलधरजालकान्ति कन्यकानिकेतनम् । तत्र च काश्चिन्नालकलां चन्द्राननानिदेशाचन्द्रशालैकदेशे तद्दर्शनचलित धृतिरतिष्ठम् । सा च स्वच्छन्दतःशयानाः करतलास्फालनसंघट्टनाप-नीतनिद्राः काश्चिदधिगतार्थाः सखीरकार्षीत् । अथागत्य ताश्चरण निहितशिरसः चरदलकराञ्चितेक्षणा निजशेखरकेसररजःसंलग्नषट् चरणगणरणितसंचारितकलगिरः शनैरकथयन् । आर्य्य यदत्या-दित्यतेजसस्ते एषा नयनलक्ष्यतां गता ततः कृतान्तेन न गृहीता दत्ता चैयं चित्तजेन गरीयसा साक्षीकृत्य रागानलम् । तदनेना-श्चर्यरत्नेन नलिनाक्षस्य ते रत्नशैलशिलातलस्थिरं रागतरलेनालङ्क्रि-यतां हृदयम् अस्याश्चरितार्थं स्तनतटं गाढालिङ्गनैः सदृशतरस्य सहचरस्य चेति । ततः सखीजनेनातिदक्षिणेन दृढतरीकृतस्नेह-निगलस्तया सन्नताङ्ग्या सङ्गत्यारंसि ।

अथ कदाचिदायासितजायारक्षितचेतसि लालसालिलङ्घन म्लानघनकेसरे राजदरण्यस्थलीललाटलीलायिततिलके ललितानङ्ग राजाङ्गीकृतनिर्भिन्नकर्णिकारकाञ्चनच्छत्रे दक्षिणदहनसारथिरया-हृतसहकारचञ्चलकलिके कालाण्डजकण्ठरागरक्तरक्ताधरारतिरणाय

सन्नाहशालिनि प्राचीनकन्यकान्तःकरणसंक्रान्तरागलाञ्छितलक्ष्मे दर्दुर
गिरितटचन्दनाश्लेषशीतलानिलाचार्यदत्तनानालतानृत्यलीले काले
कलिङ्गराजः सहाङ्गनाजनेन सह च तनयया सकलेन च नगर-
जनेन दश नीत्वा च दिनानि दिनकरकिरणजालालङ्घनीये रत्ना-
वलिसहस्रलाञ्छितनलताग्रकिसलयालीढसैकततटे तरलतरङ्गशीक-
रासारसङ्गशीतले सागरतीरकानने क्रीडारसजातासक्तिरासीत्।
अथ सन्ततगीतसङ्गीतसङ्गताङ्गनासहस्रझङ्कारहेलानिसर्गलानङ्ग
सहर्षहर्षितस्य रागलक्षीकृतस्य तस्य रन्ध्रे आन्ध्रनाथेन जयसिंहेन
सलिलतरणसाधनानीतेनानेकसंख्येनानीकेन द्रागागत्याग्रहीत स-
कलत्रः स चानीयत आसतरलाक्षी दयिता नः सह सखीजनेन
कनकलेखा। तदाहं दाहेनानङ्गदहनजनितेनान्तरिताहारश्चिन्त-
श्चिन्तयन् दयितां गलितगात्रकान्तिरित्यतर्कयं गता सा कलिङ्ग
राजतनया जनित्रा जनयित्र्या च सहारिहस्तं निरस्तधैर्यस्तां स
राजा नियतं सङ्गिघृक्षेत् तदसह्या च सा सती गररसादिना सद्यः
सन्तिष्ठेत। तस्याश्च तादृशीं दशां गतायां जनस्यास्यानन्यजेन
हन्येत शरीरधारणा सा का स्याद्गतिरिति।

अथान्तरे आन्ध्रनगरादागच्छन्नग्रजः कश्चिदैक्ष्यत। तेन चेयं
कथा कथिता। यथा किल जयसिंहेनानेकनिकारदत्तसङ्घर्षेण
जिघांसितः स कर्दनः कनकलेखादर्शनेच्छितेन रागेणारक्ष्यत। सा च
दारिका यक्षेण केनचिदधिष्ठिता न तिष्ठत्यग्रे नरान्तरस्य आय-
स्यति च नरेन्द्रसार्थसंग्रहयोगेन तन्निराकरिष्यन्नरेन्द्रो न चास्ति सिद्धि
रिति। तेन चाहं दर्शिताशः शङ्करश्वशुरशृङ्गदेशजातस्य जरत्सालस्य
स्कन्धरन्ध्रान्तर्जटाजालं निष्कृष्य तेन जटिलतां गतः कन्याचीरसञ्च-
यान्तरितसकलगात्रः कांश्चिच्छिष्यानग्राहीयम्। तांश्च नानाश्चर्य
क्रियातिसंहिताञ्जनादाकृष्टाञ्चेत्यादित्यागान्निलयहृष्टानकार्षम्।
अथासिषह दिनैः कैश्चिदन्ध्रनगरम्। तस्य नात्यासन्ने सलिलराशि
सदृशस्य कदाहंसगणादलितनलिनदलसंहतिगलितकिञ्जल्कशकल

सारस्य सारसश्रेणिशेखरस्य सरस्तीरकानने कृतनिकेतनः स्थितः शिष्यजनकथितचित्रचेष्टाक्रान्तसकलजनातिसन्धानदक्षः सन् दिशि दिशीत्यकीर्त्यत अनेन य एष जरदरण्यस्थलीसरस्तीरे स्थण्डिलशायी यतिस्तस्य किल सकलानि सरहस्यानि सषडङ्गानि च छन्दांसि रसनाग्रे सन्निहितानि अन्यानि च शास्त्राणि येन यानि न ज्ञायन्ते स तेषां तत्सकाशादर्थनिर्णयं करिष्यति। असत्येन नास्यास्यं संस्पृश्यते। सशरीरश्चैष दयाराशिः सततं ग्रहेणाद्य चिरं चरितार्था दीक्षा तथरगारजःकणैः केशन शिरसिकीर्णैरनेकस्यानेक व्यातङ्गचिरं चिकित्सकैरसंहार्यैः संहृतः तदङ्घ्रिक्षालनसलिलसेकैर्निष्कालङ्कशिरसां नश्यन्ति घ्राणेनैकेनाखिलनरेन्द्रयत्नच्छिन्नचण्डताराग्रहाः। न तस्य शक्यं शक्तेरियत्ताज्ञानं नचास्याश्चर्याकरकणिकेति।

सा चेयं कथानेकजनास्यसञ्चारिणी तस्य कनकलेखाधिष्ठानधनदाशाकरनिराक्रियातिसक्तचेतसः श्रवणयस्याकर्णतायाशकत्। सचाहरहरागत्यादरेणातिगरीयसार्थयन्नर्थैश्च शिष्यान् संगच्छन्नधिगतच्छायः कदाचित्काङ्क्षितार्थसाधनाय शनैरयाचिष्ट। ध्यानधीरः स्थानदर्शितध्यानसन्निधिश्चैनं निरीक्ष्य शनैराकथयत् तात स्थानमेष हि यत्न एतस्य हि कन्यारत्नस्य सकलकल्याणलक्षणैकराशेरधिगतिः क्षीरसागररसनालङ्कृतायाः गङ्गादिनदीसहस्रहाररयष्टिराजितायाः धराङ्गनायाश्चासादनाय साधनम्। न च स यत्नस्तदधिष्ठायी केनचिन्नरेन्द्रेण तस्याः लीलाञ्चितनीलनीरजदर्शनायाः दर्शनं सहते तदत्र सङ्क्रान्ता चीर्णव्रतानि येरहं यतिष्येऽर्थस्यास्य साधनायेति। तथादिष्टे च हृष्टे क्षितीशे गते निशि निशि निर्निशाकरार्चिषि नीरन्ध्रान्धकारकणनिकरनिगीर्णदशदिशि निद्रानिगडितनिखिलजनदृशि निर्गत्य अनलजनिलीनगाहनीयं नीरन्ध्रं क्षच्छाच्छिद्रीकृतान्तरालं तदेकतः सरस्तटं तीर्थसन्निकृष्टं केनचित् खननसाधनेनाकार्षम्। घनशिलेष्टकाच्छन्नच्छिद्राननं तत्तीरदेशं जनैरशङ्कनीयं निश्चित्य दिनादिस्नाननिर्णिक्तगात्रश्च नद्यक्तसन्तानच्छाररयच्छग्रथितरत्नं

सुमदान्धकारगन्धहस्तिदारणैककेसरिणं कनककमलपङ्कजरुचास्य
लीलानटं गगनसागरघनतरङ्गराजिवलनैकनक्रं कार्य्याकार्य्यसा-
क्षिणं सहस्रार्चिषं सहसाह्लादिगङ्गनाङ्गरागरागायितकिरणजालं
रक्तनीरजाञ्जलिनाराध्य निजनिकेतनं न्यविशम्।

याते च दिनक्षये अस्तगिरिशिखरगैरिकतटसाधारणच्छाय
तेजसि खचरराजकन्याकदर्थनयान्तरिक्षाच्चेन प्रशुरशरीरेण संक्र-
ष्टायाः सन्ध्याङ्गनायाः रक्तचन्दनचर्चितैकस्तनकलशदर्शनीये दि-
नाधिनाथे जनाधिनाथः स कृत्वा अगस्त्यस्य धरणिन्यस्तचरणनख
किरणच्छादितकिरीटः कृताञ्जलिरतिष्ठत्। आदिष्टश्च दिव्या
इष्टेष्टसिद्धिः इह जगति हि न निरीहदेहिनं श्रियः संश्रयन्ति
श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसान्निध्यानि यतस्ते साध्वी
यत्ता सच्चरितेनानाकलितकलङ्केनार्जितेनात्यादररचितेनाक्लिष्टचेतसा
अनेनानेन सरस्वया संस्कृतं यथेह तेऽद्य सिद्धिः स्यात्। तदेतस्यां
निशि गलदर्धायां गाहनीयं गाहनानन्तरञ्च सलिलतले सततगती-
नन्तःसञ्चारिणः सन्निगृह्य यथाशक्ति शय्या कार्य्या ततश्च तट-
स्खलितजलस्थगितजलजवनचलितदलकपटकाग्रदलितदेहराजहंस
वासजर्जररसितसन्दत्तकर्णास्य जनस्य श्रवणादाकर्णनीयं जनिष्यते
जलसङ्घातस्य किञ्चिदारटितम्। श्रान्ते च तत्र सलिलरटिते
क्लिन्नगात्रः किञ्चिदारक्तदृष्टिर्येनाकारेण निर्यास्यसि निचाय्य तं
निखिलजननेत्रानन्दकारिणं न स यक्षः प्रत्यव्ययतः स्थितये स्थिर
तरनिश्चितश्च ह्रस्वहस्तनिगडितश्च कन्यकाहृदयं चयोनैकेनासहनीय
दर्शनान्तरायं स्यात्। धरस्याश्च धराङ्गनाया नात्याहतनिराशतादि
चक्रं चक्रं करतलगतं चिन्तनीयं न तत्र संशयः। तच्चेदिक्षस्यनेक
शास्त्रज्ञानधीरधिषणैरधिकवैरितरैश्च हितैषिभिरालक्ष्य आशि
कामनमानाय्य अन्तरङ्गनरशतैर्यथेष्टदृष्टान्तराणं सरः क्रियेत रक्षा
च तीरात् निःशब्दशान्तराणि सैनिकजनेन सादरं रचनीया। कस्तत्र
तज्जानाति यच्छिद्रं धारयञ्चिकीर्षन्तीति। तत्त्वस्य हृदयहारि

जातं तदधिष्ठितश्च तत्र शल्ये रन्ध्रदर्शनासहैरिच्छाशं राज्ञः कन्य-
कातिरागजनितां नितान्तनिश्चलां निश्चित्यार्थमेव न निषिद्धः।
तथास्थितश्च तदासादनदृढतराशयश्च स व्याख्यायत। राजन्नेव
ते जगति चिरं स्थितं न चैकत्र चिरस्थानं नः शक्तम् कृतकृत्यश्चेह
न शक्तोऽसि यस्य ते राष्ट्रे ग्रासाद्यासादितं तस्य ते किञ्चिदनाचर्य्य
कार्य्यं गतिरार्य्यगर्ह्येति तन्नैतच्चिरस्थानस्य कारणं तथाद्य सिद्धं
गच्छ गृहान् यथार्हजपेन हृद्यगन्धेन ख्यातः सितखगाङ्कुरागः शक्ति
सदृशेन दानेनाराधितधरणितलतैतिलगणास्तिलस्नेहसिक्तायसग्र
ग्रथितचेलाञ्चलखण्डकाग्निशिखासहस्रास्तनैशान्धकारराशिरागत्यार्थ
सिद्धये यतेथा इति। स किल कृतघ्नता दर्शयन्नसिद्धिरेषा सिद्धि
र्यदसन्निधिरिष्टार्थानां कष्टा चेयं निःसङ्गता या निरागसं दासजनं
त्याजयति न च निषेधनीया गरीयसां गिर इति स्नानाय गृहानया-
सीत्। अहञ्च निर्गत्य निर्जने निशीथे सरस्तीररन्ध्रनिलीनः सन्नीष
च्छिद्रदत्तकर्णः स्थितः स्थिते चार्द्धरात्रे कृतयथादिष्टक्रियः स्नान
स्थानरक्षितरक्षः स राजा जालिकजनानानीय निराकृतान्तःशल्यं
शङ्काहीनः सरःसलिलं सलीलगतिरगाहत। गतश्च कीर्णकेशं
संहृतकर्णनासिकं सरस्तलं हास्तिनस्य नक्रलीलया नीरनिलीनया
तं तथाशयानं कन्धरायां न्यग्रहीषम्। खरतरकाचदण्डघट्टनाति
चण्डैश्च करचरणाघातैर्निर्दयदत्तनिग्रहः क्षणेनैकेनाजहात्स चेष्टां
ततश्चाकृष्य तच्छरीरं छिद्रे निधाय नीरान्निरयासिषम्। सद्यः
सङ्कृतानाश्च सैनिकानां तदत्यचिभीयताकारान्तरग्रहणम्। गज
स्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितश्चण्डतरदण्डिदण्डता-
डनचलजनदत्तान्तरया राजरथ्यया गतस्तां निशां नयननिरस्त
निद्रारतिरनैषम्। नीते च जनस्याद्विवस्वतां लाक्षारसदिग्धदिग्गज
शिरःसदृशे शक्रदिगङ्गनारत्नादर्शेऽर्कचक्रे कृतकरणीयः किरण
जालकरालरत्नराजिराजितराजार्हासनाध्यासी यथासदृशाचार
दर्शिनः शङ्कायन्त्रिताङ्गान् सन्निधिनिषादिनः सहायानगादिषम्।

दृश्यतां शक्तिरार्षी यत्तस्य यतेरजेयस्येन्द्रियाणां संस्कारेण नीरजसा नीरजसान्निध्यशालिनि सद्धंसशालिनि सरसि सरसिजदलसन्निकाशच्छायस्याधिकतरदर्शनीयस्याकारान्तरस्य सिद्धिरासीत्। अथ सकलनास्तिकानां शमेन लज्जानतं शिरः तदिदानीं चन्द्रशेखर नरकशासन सरसिजासनादीनां त्रिदशेशानां स्थानान्याददरचितनृत्यगीताराधनानि क्रियन्तां ध्रियन्तां च गृहादितः क्रमेणेतरसनसद्धान्यर्थिसार्थे धनानीति। आश्चर्यरसातिरेकहृष्टहृदयास्ते जय जगदीश स्वतेजसातिशय्य दश दिशः स्थगयन्निजेन यशसादिगन्तरयशांसि इत्यसकृदाशास्याचरन्यथादिष्टाः क्रियाः। सचाहं दयितायाः सखीं हृदयस्थानीयां शशाङ्कसेनां कन्यकां कदाचित्कार्यान्तरागतां रहस्याचच्छिषि कच्चिदयं जनः कदाचिदासीद्दृष्ट इति। अथ सा हर्षकाष्ठाकृष्टेन हृदयेनेषदालक्ष्यदशनदीधितिलतां लीलालसं लासयन्ती ललिताञ्चितकरशाखान्तरितदन्तच्छदकिसलया हर्षजलक्लेदजर्जरनिरञ्जनेक्षणा रचिताञ्जलिर्नितरां जाने यदि न स्यादैन्द्रजालिकस्य शास्त्रं किञ्चिदेतादृशं कथयैतत्कथयेति स्वैरनियन्त्रणं शनैरगादीत्। अहं त्वास्ये कार्त्स्न्येनाख्याय तदाननसङ्क्रान्तेन सन्देशेन सज्जनस्य सच्चर्यानिरतिशयं हृदयाह्लादम् ततश्चैतया दयितया निरर्गलीकृतातिसत्कृतकलिङ्गनाथन्यायदत्तया सङ्गत्यान्ध्रकलिङ्गराज्यं कलिङ्गनाथे न्यासं तस्यास्यारिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यकाय यातधीयसा साधनेनागत्याद्य ते सखिजनसङ्गतस्य यादृच्छिकदर्शनानन्दराशिलङ्घितचेता जातइति। तस्य तत्कौशलं स्मितज्योत्स्नाभिषिक्तदन्तच्छदः सह सुहृद्भिरभिनन्द्य चित्रमिदं महामुनेरकर्त्तनमेव खलु फलितमतिकष्टं तपस्तिष्ठतु तावदस्मद्धर्षप्रकर्षस्पृशोः प्रशासस्तयोर्द्वंद्वमिह स्वरूपमित्यभिधाय पुनरवतरतु भवानिति वज्रश्रुते विश्रुते विश्वम्भराशीव सदृशं दृशं चिक्षेप देवो राजवाहनः। सोऽप्याचचक्षे।

इति दण्डिनः कृतौ दशकुमारचरिते मन्त्रगुप्तचरितं
नाम सप्तम उच्छ्वासः।

# अष्टम उच्छ्वासः।

## विश्रुतचरितम्।

देव मयापि परिभ्रमता विन्ध्याटव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन् क्लेशानर्हः कश्चित्कूपाभ्यासेऽष्टवर्षदेशीयो दृष्टः। स च त्रासगद्गदमगदत्। महाभाग क्लिष्टस्य मे क्रियतामार्य्य साहाय्यकम्। अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्त्तुमुदकमुदञ्चन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः तमपनेतुमस्मि नाहमुद्धर्त्तुमिति। अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य्य तञ्च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पक्वैः शरक्षेपोच्छ्रितस्य लिकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य तरुतलनिषण्णमुक्तं अरन्तमब्रवम्। तात क एष बालः को वा भवान् कथञ्चेयमापदापन्नेति। सोऽश्रुगद्गदमगदत् श्रूयतां महाभाग।

विदर्भानाम जनपद कस्मिन् भोजवंशभूषणमंशावतार इव धर्म्मस्यातिसत्वः सत्यवादी वदान्यो विनीतो विनेता प्रजानां रञ्जितभृत्यः कीर्त्तिमानुदग्रो बुद्धिमूर्त्तिभ्यामुत्थानशीलः शास्त्रप्रमाणकः शक्यभव्यकल्यारम्भी सम्भावयिता बुधान् प्रभावयिता सेवकानुद्भावयिता बन्धून् न्यग्भावयिता शत्रून् असम्बद्धप्रलापेष्वदत्तकर्णः कदाचिदप्यवितृष्णो गुणेष्वतिनदीष्णः कलासु नेदिष्ठो धर्म्मार्थसंहितासु स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्त्ता। प्रत्यवेक्षिता कोशवाहनयोर्यत्नेन

परीक्षिता सर्व्वाध्यक्षाणाम् उत्साहयिता कृतकर्म्मणाम् अनुरूपैर्दानमानैः सद्यः प्रतिकर्त्ता देवमानुषीणामापदां षाड्गुण्योपयोगनिपुणो मनुमार्गेण प्रणेता चातुर्व्वर्ण्यस्य पुण्यश्लोकः पुण्यवर्म्मा नामासीत्। स पुण्यैः कर्म्मभिः प्राप्य पुरुषायुषं पुनरपुण्येन प्रजानामगण्यतामरेषु। तदनन्तरमनन्तवर्म्मा नाम तदायतिरवनिमध्यतिष्ठत्। स सर्व्वगुणैः समृद्धोऽपि दैवाद्दण्डनीत्यां नात्यादृतोऽभूत्। तमेकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः पितुरस्य बहुमतः प्रगल्भवागभाषत। तात सर्व्वैवात्मसम्पदभिजनात् प्रभृति अन्यूनैवात्रभवति लक्ष्यते बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तारा त्वेतरेभ्यः प्रतिविशिष्यते। तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेष्वनभिसंयोजितेव हेमजातिर्नातिभाति बुद्धिः बुद्धिहीनो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते न च शक्तः साध्यं साधनं वा विभज्य वर्त्तितुम्। अयथावृत्तश्च कर्म्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते। न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय। अतिक्रान्तशासनाश्च प्रजा यत्किञ्चन वादिन्यो यथाकथञ्चिद्वर्त्तिन्यः सर्व्वाः स्थितीः सङ्किरेयुः निर्म्मर्य्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानञ्च भ्रंशयेत्। आगमदीपदृष्टेन खल्वध्वना सुखेन वर्त्तते लोकयात्रा। दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात्। अतो विहाय बाह्यविद्यास्वभिषङ्गमागमयस्व दण्डनीतिं कुलविद्यां तदर्थानुष्ठानेन चावर्ज्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्व्वीमिति।

एतदाकर्ण्य स्थान एव गुरुभिरनुशिष्टं तथा क्रियत इत्यन्तः पुरमविशत्। तां च वार्त्तां पार्थिवेन प्रमदासन्निधौ प्रसङ्गेनोदीरितामुपनिशम्य समीपोपविष्टः चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्यवादित्रादिष्ववाह्यो वाह्यनागरीपरायणः पटुरयन्त्रितमुखो बहु

भङ्गिविशारदः परमर्म्मान्वेषणपरः परिहासयिता परिवादरुचिः पैशुन्यपण्डितः सचिवसकाशादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्व्वं व्यज्ञिपयत्। देव दैवानुग्रहेण यदि कश्चिद्राजनं भवति विभूतेस्तमकस्मादुपायवचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्त्ताः। तथाहि। केचित्त्वेव किल यज्ञैरभ्युदयातिशयं राज्ञामुत्पाद्य सुखयित्वा शिरो बद्ध्वा दर्भरज्जुभिरजिनेनाच्छाद्य नवनीतेनोपलिप्यानशनञ्च ग्राहयित्वा सर्व्वस्वं स्वीकरिष्यन्ति तेभ्योऽपि घोरतराः पाषण्डिनः पुत्त्रदारशरीरजीवितान्यपि मोचयन्ति। यदि कश्चित्पटुजातीयो नास्ते शृगालधिक्कायै हस्तगतं त्यक्तुमिच्छेत् तमन्ये परिवार्य्याहुः। एकामपि काकिणीं कार्षापणसहस्रमापादयेम शस्त्रादृते सर्व्वशत्रून् घातयेम एकशरीरमात्रमपि मर्त्यं चक्रवर्त्तिनं विदधीमहि यद्यस्मदुद्दिष्टेन मार्गेण चर्य्यत इति। स पुनरिमान् प्रत्याह कोऽसौ मार्ग इति। पुनरिमे ब्रुवते। ननु चतस्रो राजविद्यास्त्रयी वार्त्ता आन्वीक्षिकी दण्डनीतिरिति तासु तिसृस्त्रयीवार्त्तान्वीक्षिक्यो महत्यो मन्दफलाश्च तास्तावदासताम् अधीष्व तावद्दण्डनीतिम् इयमिदानीमाचार्य्यविष्णुगुप्तेन मौर्य्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्म्मक्षमेति। स तथेत्यधीते शृणोति च तथैव जरां गच्छति। तत्तु किम शास्त्रं शास्त्रान्तरानुबन्धि सर्व्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगंस्यते। भवतु कालेन बहुनाल्पेन वा तदर्थाधिगतिः। अधिगतशास्त्रेण चादावेव पुत्त्रदारमपि न विश्वास्यम्। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः सम्पद्यते इयत ओदनस्य पाकायैतावदिन्धनं पर्य्याप्तमिति मानोन्मानपूर्व्वकं देयम्। उत्थितेन च राज्ञा क्षालिताक्षालिते मुखे मुष्टिमर्द्धमुष्टिं वाभ्यन्तरीकृत्य कृत्स्नमायव्ययजातम् अह्नः प्रथमेऽष्टमे भागे श्रोतव्यम् शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्त्ताश्चत्वारिंशतं चाणक्योपदिष्टाना-

हरणोपायान् सहस्राध्यात्मबुद्ध्यैव ते विकल्पयितारः । द्वितीये अन्योन्यं विवदमानानां प्रजानामाक्रोशैर्दह्यमानकर्णः कष्टं जीवति । तत्रापि प्राड्विवाकादयः स्वेच्छया जयपराजयौ विवादधनाः पापेनाकीर्त्त्या च भर्त्तारमात्मानञ्च अर्थैर्योजयन्ति । तृतीये स्नातुं भोक्तुञ्च लभते भुक्तस्य यावदन्नपरिणामस्तावदस्य विषभयं न शाम्यत्येव । चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति । पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति । तत्रापि मन्त्रिणो मध्यस्था इवान्योन्यं मिथः सम्भूय दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकालकार्य्यावस्थाश्च स्वेच्छया विपरिवर्त्तयन्तः स्वपरमित्रमण्डलान्युपजीवन्ति बाह्याभ्यन्तरांश्च कोपान् गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगच्छन्ति । षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः सोऽस्यैतावान् स्वैरविहारकालो यस्य तिस्रः स्नानादेरन्तरा नाडिकाः । सप्तमे च तुरङ्गकुञ्जरप्रत्यवेक्षणप्रयासः अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः पुनरुपास्यैव सन्ध्यां प्रथमे रात्रिविभागे गूढपुरुषा द्रष्टव्याः सम्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः द्वितीये भोजनानन्तरं श्रोत्रियइव स्वाध्यायमारभते । तृतीये तूर्य्यघोषेण संविष्टः चतुर्थपञ्चमौ शयीत किल कथमिवास्याजस्रचिन्तायासविक्लवमनसो वराकस्य निद्रासुखमुपनमेत । पुनः षष्ठे शास्त्रचिन्ताकार्य्यचिन्तारम्भः । सप्तमे तु मन्त्रग्रहो दूताभिप्रेषणानि च । दूताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान् वीतशुल्कबाधवर्त्मनि वणिज्यया वर्द्धयन्तः कार्य्यमविद्यमानमपि लेख्येनोत्पाद्यानवरतं भ्रमन्ति । अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः अद्य दृष्टो दुःस्वप्नः दुःस्थिता ग्रहाः शकुनानि चाशुभानि शान्तयः क्रियन्तां सर्व्वमस्तु सौवर्णमेव क्षेमसाधनम् एवं सति कर्म्म गुणवद्भवति ब्रह्मकल्पा इमे ब्राह्मणाः कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति । ते चामी कष्टदारिद्र्या बहुपत्या यज्वानो वीर्य्यवन्तश्च अद्याप्यप्राप्तप्रतिग्रहा दत्तञ्चैभ्यः स्वर्ग्यमायुष्य-

मरिष्टनाशनश्च भवतीति बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति। तदेवमहर्निशमविहितसुखलेशमायासबहुलम् अविरतकदर्थनञ्च नयतो नयज्ञस्यार्त्ता पार्थिवता स्वमङ्गमात्रमपि दुरारक्ष्यं भवेत्। शास्त्रज्ञसमाज्ञातो हि यद्ददाति यन्मानयति यत्प्रियं ब्रवीति तत्सर्व्वमतिसन्धातुमित्यविश्वासः अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः यावता च नयेन विना न लोकयात्रा स लोकत एव सिद्धः नात्र शास्त्रेणार्थः स्तनन्धयोऽपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते। तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि येऽप्युपदिशन्ति एवमिन्द्रियाणि जेतव्यानि एवमरिषड्वर्गस्त्याज्यः सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः सन्धिविग्रहचिन्तयैव नेयः कालः स्वल्पोऽपि सुखस्यावकाशो न देय इति तैरप्येभिर्मन्त्रिबकैर्युष्मत्खोर्थ्यार्ज्जितं धनं दासीरण्डैरिव भुज्यते। के चैते वराकाः येऽपि मतिकर्कशास्तत्वकाराः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः कृतं वा तैः शास्त्रानुष्ठानम् तेऽपि हि प्रारब्धेषु कार्य्येषु दृष्टे सिद्ध्यसिद्धी पठन्तश्चापठद्भिरतिसन्धीयमाना बहवः नन्विदमुपपन्नं देवस्य यदुत सर्व्वलोकस्य वन्द्या जातिरयातयामं वयो दर्शनीयं वपुरपरिमाणा विभूतिः। तत्सर्व्वं सर्व्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात् सर्व्वकार्य्येष्वनुत्साहसंशयेन तत्त्वावापेन माक्षयाकृथा सन्ति ते दन्तिनां दश सहस्राणि हयानां लक्षत्रयम् अनन्तश्च पादातम् अपि च पूर्णान्येव हेमरत्नैः कोशगृहाणि सर्व्वश्चेष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति। किमिदमपर्य्याप्तं यदन्यार्ज्जनायायासः क्रियते। जीवितं हि नाम जन्मवतां चतुःपञ्चाण्यहानि तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम् अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीशन्ते। किं बहुना राज्यभारं भारज्ञमेष्वन्तरङ्गेषु भक्तिमत्सु समर्प्याप्सरःप्रतिरूपाभिरन्तःपुरिकाभी

रममाणो गीतसङ्गीतपानगोष्ठीश्च यथर्तु बध्नन् यथार्हं कुरु शरीरलाभमिति प्रशस्याङ्गीस्पृष्टभूमिरञ्जलिचुम्बितचूडश्चिरमशेत। प्रहसीच प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः जननाथश्च सस्मितम् उत्तिष्ठ ननु शिक्षितोपदेशाद्गुरवो भवन्तः किमिति गुरुत्व विपरीतमनुष्ठितमिति तमुत्थाप्य क्रीडानिर्भरमतिष्ठत्।

अथैतेषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्य्यमाणो मन्त्रिवृद्धेन वचसाभ्युपेत्य मनसैवाचित्तज्ञत्यवज्ञातवान्। अथैवं मन्त्रिणोऽमनस्यभूत्। अहो मे मोहादालिप्सम् अरुचितेऽर्थे चोदयन्नर्थीवाधिगतोऽहमस्य शास्त्रेणातः स्पष्टमस्य चेष्टानामायथापूर्व्वम्। तथाहि न मां स्निग्धं पश्यति न स्मितपूर्व्वं भाषते न रहस्यानि विवृणोति न हस्ते स्पृशति न व्यसनेष्वनुकम्पते नोत्सवेष्वनुगृह्णाति न विलोभनवस्तु प्रेषयति न मत्सुकृतानि प्रगणयति न मे गृहवार्त्तां पृच्छति न मत्पक्षान् प्रत्यवेक्षते न मामासन्नकार्य्येष्वभ्यन्तरीकरोति न मामन्तःपुरं प्रवेशयति। अपि च मामनर्हेषु कर्म्मसु नियुङ्क्ते मदासनमन्यैरवष्टभ्यमानमनुजानाति मद्वैरिषु विश्रम्भं दर्शयति मदुक्तस्योत्तरं न ददाति मत्समानदोषान्विगर्हति मर्म्मणि मामुपहसति स्वमतमपि मया वर्ण्यमानं प्रत्यवक्षिपति मच्छार्थ्याणि वस्तूनि मत्प्रहितानि नाभिनन्दति नयज्ञानां स्खलितानि मत्समक्षं मूर्खैरुद्घोषयति। सत्यमाह चाणक्यः चित्तज्ञानानुवर्त्तिनोऽनर्था अपि प्रियाः स्युः दक्षिणा अपि तद्भावबहिष्कृता द्वेष्या भवेयुरिति। तथापि का गतिरविनीतोऽपि न परित्याज्यः पितृपैतामहैरस्माद्दृशैरयमधिपतिः। अपरित्यजन्तोऽपि कमुपकारमस्य मायावाचः कुर्म्मः। सर्व्वथा नयज्ञस्य वसन्तभानोरश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम् अपि नामापदो भाविन्यः प्रकृतिस्थमेनमापादयेयुः। अनर्थेषु सुलभव्यलीकेषु कश्चिदुत्पन्नोऽपि दोषः सद्वृत्तमस्मै न रोचयेत्। भवतु भविता तावदनर्थः स्मितपिशुनजिह्मो। यथाकथञ्चिदस्मत्पदस्थिरेयमिति।

एवं गते मन्त्रिणि राजनि च कामवृत्ते चन्द्रपालितो नामाश्मकेन्द्रामात्यस्येन्द्रपालितस्य सूनुरसद्वृत्तः पितृनिर्वासितो नाम भूत्वा बहुभिश्चारणैर्भण्डीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकैश्छन्नकिङ्करैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत्। अमुना चैव संक्रमेण राजन्यास्पदमलभत। लब्धरन्ध्रश्च स यद्यद्व्यसनमारभते तत्तदेवावर्णयत्। देव यथा मृगया ह्युपकारिणी न तथान्यत् अत्र हि व्यायामोत्कर्षादापत्सूपकर्त्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः कफापचयादारोग्यैकमूलमाशयाग्निदीप्तिः मेदोऽपकर्षादङ्गानां स्थैर्य्यकार्कश्यातिलाघवादीनि शीतोष्णवातवर्षक्षुत्पिपासासहत्वं सत्त्वानामवस्थान्तरेषु चित्तचेष्टितज्ञानं हरिणगवलगवयादिवधेन शस्यलोपप्रतिक्रिया वृकव्याघ्रादिघातेन स्थलपथशल्यशोधनं शैलाटवीप्रदेशानां विविधकर्म्मक्षमाणामालोचनम् आटविकवर्गविश्रम्भणम् उत्साहशक्तिसन्धुक्षणेन प्रत्यनीकविन्नासनमिति बहुतमा गुणाः। द्यूतेऽपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्य्यं जयपराजयानवस्थानाद्धर्षविषादयोरविधेयत्वं पौरुषैकनिमित्तस्यामर्षस्य वृद्धिः अक्षहस्तभूम्यादिगोचराणामत्यन्तदुरुपलक्ष्याणां कूटकर्म्मणामुपलक्षणादनन्तबुद्धिनैपुण्यम्। एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम् अध्यवसायसहचरेषु साहसेष्वभिरतिः अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्षणीयता मानावधारणमकृपणस्य शरीरयापनमिति। उत्तमाङ्गनोपभोगेष्वर्थधर्म्मयोः सफलीकरणं पुष्कलः पुरुषाभिमानः भावज्ञानकौशलमलोभक्लिष्टमाचेष्टितम् अखिलासु कलासु वैचक्षण्यम् अलब्धोपलब्धिलब्धानुरक्षणरक्षितोपभोगमुक्तानुसन्धानरुष्टानुनयादिष्वजस्रमभ्युपायरचनया बुद्धिवाचोः पाटवम् उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसम्भावनीयता परं सुहृत्प्रियत्वं गरीयसी परिजनापेक्षा स्मितपूर्व्वाभिभाषित्वम् उद्रिक्तसत्वता दाक्षिण्यानुवर्त्तनम् अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति। पानेऽपि नानाविधरोग

भङ्गपटीयसा मासवानामासेवनात् स्पृहणीयवयोव्यवस्थापनम् अह-ङ्कारप्रकर्षादशेषदुःखतिरस्करणम् अङ्गरागदीपनादङ्गोपभोगशक्तिसन्धुक्षणम् अपराधप्रमार्ज्जनान्मनःशल्योन्मार्ज्जनम् अश्लाघ्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणम् मत्सरानुबन्धादानन्दैकतानता शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः संविभागशीलतया सुहृद्वर्गसंवर्द्धनम् अनुपमानमङ्गलावाप्यम् अनुत्तराणि विलसितानि भयार्त्तिहरणाच्च सांग्रामिकत्वमिति । वाक्पारुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमौपकारकाणि । नहि मुनिरिव नरपतिरुपशान्तरतिरभिभवितुमरिकुलमलम् अवलम्बितुञ्च लोकतन्त्रमिति ।

असावपि गुरूपदेशमिवाल्यादरेण तस्य मतमन्ववर्त्तत तच्छीलानुसारिण्यश्च प्रकृतयो विग्रहक्लममसेवन्त व्यसनानि सर्व्वञ्च समानदोषतया न कश्चिच्छिद्रान्वेषणायायतिष्ट समानभर्त्तृप्रशस-यस्तत्राध्यक्षाः स्वानि कर्म्मफलान्यभक्षयन् । ततः क्रमादायद्वाराणि अशीर्य्यन्त व्ययमुखानि विटविधेयतया विभोरहरहर्व्यवर्द्धन्त सामन्तपौरजानपदमुख्याश्च समानशीलतयोपारूढविश्रम्भेण राज्ञा सजानयः पानगोष्ठीष्वभ्यन्तरीकृताः स्वैरमाचारमध्यचारिषुः । तदङ्गनासु चानेकापदेशपूर्व्वमपाचरन्नरेन्द्रस्तदन्तःपुरेषु चामी भिन्नवृत्तेषु मन्दत्रासावज्ञसुखैरवर्त्तन्त सर्व्वञ्च कुलाङ्गनाजनः सुलभभङ्गिभावश्चरतो भग्नचारित्रयन्त्रणा स्त्रैणायापि न गणयित्वा भर्त्तृन् धात्वगणमन्वयान्यग्रहीत् । तन्मूलाश्च कलहाः सामर्थाणामुदभवन् अहन्यन्त दुर्ब्बला बलिभिः । अपहृतानि धनवतां धनानि तस्करादिभिः अपहृतपरिभूतयः प्रहृताश्च पातकपथाः हतबान्धवाः हृतवित्ता बधबन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्यः प्रजाः दण्डश्चायथाप्रणीतो भयक्रोधावजनयत् । क्षत्रकुटुम्बेषु लोभः पदमधत्त विमानिताश्च तेजस्विनो मानेनादह्यन्त । तेषु तेषु चाकृत्येषु प्रासरन् परोपजापाः । तदा च स्वगृहवेश्मभ्रमणलब्धवर्णनेनाभिमोणी

रनपसारमार्गैः शुष्कतृणवंशगुल्मान् प्रवेश्य दारतोऽग्निविसर्गैः व्याघ्रादिवधे प्रोत्साह्य तन्मुखपातनैः शरकूपतल्पोत्पादनेनातिदूरहारितानां प्राणहारिभिः क्षुत्पिपासाभिवर्द्धनैः तृणगुल्मगूढश्वभ्रतटप्रदरपातहेतुभि र्विषममार्गप्रधावनै र्विषमुखीभिः क्षुरिकाभिश्चरणकण्टकोद्धरणैः विश्रम्भसरविच्छिन्नानुयात्रतया एकाकीकृतानां यथेष्टघातनैः मृगदेहापराद्धै र्नामिषुमोक्षणैः सपणबन्धमधिरुह्याद्रिशृङ्गाणि दुरधिरोहाण्यनन्यलक्ष्यैः प्रभ्रंशनैः आटविकच्छद्मना विपिनेषु विरलसैनिकानां प्रतिरोधनैः अक्षद्यूतपक्षियुद्धयात्रोत्सवादिसङ्कुलेषु बलवदनुप्रवेशनैः इतरेषां हिंसोत्पादनैः गूढोत्पादितव्यलीकेभ्योऽप्रियाणि प्रकाशं भक्त्वा साक्षिषु तद्विख्यापनाकीर्त्तिशुद्धिहेतुभिः पराक्रमैः परकलत्रेषु सुहृत्त्वेनाभियोज्य जारान् भर्तॄनुभयं वा प्रहृत्य तत्साहसोपन्यासयोग्यनारीहारितानां सङ्केतेषु प्रागुपनीय पश्चादभिद्रुत्याकीर्त्तनीयैः प्रमापणैः उपप्रलोभ्य विलप्रवेशेषु निधानखननेषु मन्त्रसाधनेषु च विघ्नव्याजसाध्यैर्व्यापादनैः मत्तगजाधिरोहणाय प्रेर्य्य प्रत्यवायनिर्वर्त्तनैः व्यालहस्तिनं कोपयित्वा वध्यीकृतमुख्यमल्लेषु अपक्रमणैः दायाद्यार्थे विवदमानानुपांशु हत्वा प्रतिपक्षेष्वयशःपातनैः सामन्तपुरजनपदेष्वयथावृत्तानप्रकाशमभिप्रहृत्य तद्वैरिनामघोषणैः योग्याङ्गनाभिरहर्निशमभिरमय्य राजयक्ष्मोत्पादनैः वस्त्राभरणमाल्याङ्गरागादिषु रसविधानकौशलैः चिकित्सामुखेनामयोपबृंहणैरन्यैश्चाभ्युपायैः अश्मकेन्द्रप्रयुक्तास्तीक्ष्णरसदादयः प्रख्यापितप्रवीरमनन्तवर्म्मकटकं जर्जरमकुर्वन्।

अथ वसन्तभानुर्भानुवर्म्माणं नाम वानवास्यं प्रोत्साह्य अनन्तवर्म्मणा व्यग्राहयत्। तत्परामृष्टराष्ट्रपर्य्यन्तश्चानन्तवर्म्मा तमभियोक्तुं बलसमुत्थानमकरोत्। सर्व्वसामन्तेभ्यश्चाश्मकेन्द्रः प्रागुपेत्यास्य प्रियतरोऽभूत्। अपरेऽपि सामन्ताः समगंसत गत्वा चाभ्यर्णे नर्मदारोधसि न्यविशत्। तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्याङ्गनाटकीयां ख्यातामुर्वशीं नाम चन्द्रपालितादिभिरति-

प्रशस्तनृत्यकौशलामाहूयानन्तवर्मा स्वयमग्रहीत्। अतिरक्तश्च भुक्तवानिमां मधुमत्ताम्। अश्मकेन्द्रस्तु कुन्तलपतिमेकान्ते समभ्यधत्त प्रमत्तएष राजा कलत्राणि नः परामृशति कियत्यवज्ञा सोढव्या मम शतमस्ति हस्तिनां पञ्चशतानि च ते तदावां सम्भूय मुरलेशं वीरसेनमृचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथञ्च नागपालमुपजपावः ते चावश्यमस्याविनयमसहमाना अस्मन्मतेनैवोपवर्त्तेरन्। अयञ्च वानवास्यः प्रियं मे मित्रममुनैनं दुर्विनीतमग्रतोऽवस्थितं पृष्ठतः प्रहरेम कोशवाहनञ्च विभज्य गृह्णीमहीति। इत्येतेन चामुनाभ्युपेते विंशतिं वरांशुकानां पञ्चविंशतिं काञ्चनकुङ्कुमपलानां प्राभृतीकृत्याप्तमुखेन तैः सामन्तैः सम्भवात्र तानपि स्वमतावस्थापयत्। उत्तरेद्युरुक्तेषां सामन्तानां वानवास्यस्य चानन्तवर्म्मा नयदोषादाभिषत्यमगमत्। वसन्तभानुश्च तत्कोशवाहनमवशीर्णमात्माधिष्ठितमेव कृत्वा यथाप्रयासं यथाबलञ्च विभज्य गृह्णीत युष्मदनुज्ञया येन केनचिदंशेनाहं तुष्यामीति शाठ्यात्सर्वानुवर्त्ती तेनैवाभिषेण निमित्तीकृतेनोत्पादितकलहः सर्व्वसामन्तानध्वंसयत्। तदीयञ्च सर्व्वस्वं स्वयमेवाग्रसत्। वानवास्यं केनचिदंशेनानुगृह्य प्रत्यावृत्य सर्वमनन्तवर्म्मराज्यमात्मसादकरोत्।

अस्मिंश्चान्तरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः सम्भूय बालमेनं भास्करवर्म्माणम् अस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीम् अनयोश्च मातरं महादेवीं वसुन्धरामादायापसर्पन्नापदोऽस्या भावितया दाहज्वरेण देहमजहात्। अस्माद्दशैर्भिश्चैस्तु नीत्वा माहिष्मतीं भर्त्तृद्वैमातुराय भ्रात्रे मित्रवर्म्मणे सापत्न्या देवी दर्शिताभूत्। ताश्चार्थ्यामनार्य्योऽसौ अन्यथाभ्यमन्यत निर्भर्त्सितश्च तया सुतमियमखण्डचारित्रा राज्यार्थं चिकीर्षतीति नैर्घृण्यात्तमिमं बालमजिघांसीत्। इदन्तु ज्ञात्वा देव्याहमाज्ञप्तस्तात नासीञ्जनु जीवतानेनार्भकेण यत्र क्वचिदवधाय नीत्र जीवेयदेवाहमपि एनमनुसरिष्यामि ज्ञापय मां क्षेमप्रवृत्तः स्ववार्त्तामिति। अहन्तु सङ्कुले

द्राजकुले कथञ्चिदेनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि। पाद-
चारदुःखितञ्चैनमाश्वासयितुं घोषे क्वचिदहानि कानिचिद्विश्रमय्य
तत्रापि राजपुरुषसम्पातभीतो दूरमपासरं तत्रास्य दारुणपिपासा
पीड़ितस्य वारि दातुकामः कूपेऽस्मिन्नपभ्रश्य पतित स्त्वयैवमनुगृहीत
स्त्वमेवास्यातः शरणमेधि विशरणस्य राजसूनोरित्यञ्जलिमबध्नात्।

किमीया जात्यास्य मातेत्यनुयुक्ते मया अमुनोक्तं पाटलिपुत्रस्य
वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोशलेन्द्रात् कुसुम
धन्वनोऽस्य माता जातेति। यद्येवमेतन्मातुर्मत्पितुश्चैको मातामह
इति सख्ये तमहं समसृजे। वृद्धेनोक्तं सिन्धुदत्तपुत्राणां कतमस्ते
पितेति सुश्रुत इत्युक्ते सोऽत्यहृष्यत्। अहन्तु तं भयावशिष्टम्
अर्भकं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयमिति प्रति-
ज्ञाय कथमस्येमां क्षुधं क्षपयेयमित्यचिन्तयम्। तावदापतितौ च
कस्यापि व्याधस्य शीघ्रमनतीत्य द्वौ मृगौ स च व्याधस्तस्य हस्ता-
दवशिष्टमिषुद्वयं कोदण्डञ्चाक्षिप्यावधिषम्। एकञ्च सपत्राकृतो-
ऽन्यश्च निष्पत्राकृतोऽपतत्। तच्चैकं मृगं दत्त्वा मृगयवेऽन्य-
स्यापनीतत्वचः कोमलापेशीः निष्कुलाकृत्य विशल्योर्ध्वास्थिग्रीवादीनि
शूलाकृत्य दावाङ्गारेषु तप्तेनामिषेण तयोरात्मनश्च क्षुधमत्यतार्षम्।
एतस्मिन् कर्म्मणि मत्सौष्ठवेनातिहृष्टं किरातमस्मि पृष्टवान्। अपि
जानासि माहिष्मतीवृत्तान्तमिति। असावाचष्ट तत्र व्याघ्रत्वचो
हृतीय विक्रीयाद्यैवागतः किं न जानामि प्रचण्डवर्म्मा नाम चण्ड
वर्म्मानुजो मित्रवर्म्मदुहितरं मञ्जुवादिनीं विलुप्सुरभ्येतीति तेनोत्स-
वोत्तरा पुरीति।

अथ कर्णौ जीर्णमग्रवं धूर्त्तोऽमित्रवर्म्मा दुहितरि सम्यक्प्रति-
पन्ना मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य बालकं जिघांसति तत्
प्रतिगत्य कुशलमस्य मदागतिञ्च देव्यै रहोनिवेद्य पुनः कुमारः
शार्दूलभक्षितइति प्रकाशमाक्रोशः कार्य्यः स दुर्म्मतिरन्तःप्रीतो
बहिर्दुःखं दर्शयन् देवीमनुनेष्यति। पुनस्त्वया तन्मुखेन स वाच्यः

यदपेक्षया त्वन्मतमत्यक्रमिषं सोऽपि बालः पापेन मे परलोकमगात् अस्तु त्वदादेशकारिण्येवाहमिति। स तथोक्तः प्रीतिं प्रतिपद्याभिपत्स्यति। पुनरनेन वत्सनाभनाम्ना महाविषेण सन्नीय तोयं तत्र मालां मज्जयित्वा तया स वक्षसि मुखे च हन्तव्यः सएवायमसिप्रहारः पापीयसस्तव भवतु यद्यस्मि पतिव्रता पुनरनेनागदेन सङ्क्रमितेऽम्भसि तां मालां मज्जयित्वा सदुहित्रे देया मृते तु तस्मिंस्तस्याश्च निर्विकारायां सत्यां सतीत्येवैनां प्रकृतयोऽनुवर्त्तिष्यन्ते पुनः प्रचण्डवर्म्मणो सन्देशम् अनायकमिदं राज्यमनेनैव सह बालिकेयं स्वीकार्य्येति। तावदावां कापालिकवेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुराद्बहिरुपश्मशानं वत्स्यावः पुनरार्य्यप्रायान् पौरवृद्धानामात्यांश्च मन्त्रिवृद्धानेकान्ते ब्रवीतु देवी स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः अद्य चतुर्थेऽहनि प्रचण्डवर्म्मा मरिष्यति पञ्चमेऽहनि रेवातटवर्त्तिनि मद्भवने परीक्ष्य वैजन्यं जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति। स राज्यमिदमनुपाल्य बालान्ते प्रतिष्ठापयिष्यति। स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः। सा चेयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पितेति। तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यत इति।

स साम्प्रतमतिप्रीतः प्रयातोऽर्थश्चायं यथाचिन्तितमनुष्ठितोऽभूत्। प्रतिदिशञ्च लोकवादः प्रासर्पत्। अहो माहात्म्यं पतिव्रतानामसिप्रहार एव हि स मालाप्रहारस्तस्मिन् जातो न शक्यमुपधियुक्तमेतत्कर्म्मेति वक्तुं यतस्तदेव दत्तं दाम दुहित्रे स्तनमण्डनमेव तस्यै जातं न मृत्युः। योऽस्याः पतिव्रतायाः शासनमतिवर्त्तेत स भस्मैव भवेदिति।

अथ महाव्रतिवेषेण माञ्च पुत्रञ्च भिक्षार्थे प्रविष्टौ दृष्ट्वा प्रस्नुतस्तनी प्रत्युत्थाय हर्षाकुलमब्रवीत्। भगवन्नयमञ्जलिरनाथोऽयं जनोऽनुगृह्यतामस्ति ममैकः स्वप्नः स किं सत्योनवेति। मयोक्तं

फलमस्याश्चैव ऋच्छसीति। यद्येवं बहु भागधेयमस्यावोदारस्याः स खल्वस्याः सानाथ्यांशी स्वप्नइति मद्दर्शनरागबद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य भूयोपि सा हर्षगर्भमब्रूत तच्चेन्मिथ्या सोऽर्थं युष्मदीयोबालकपाली श्वोमया निरोद्धव्यइति। मयापि सस्मितं मञ्जुवादिनीरागदीनदृष्टिपीडधैर्य्येण एवमस्त्विति लब्धभैक्षो नालीजङ्घमाकार्य्य निर्गम्य ततश्च तच्चानुयान्तं शनैरपृच्छम्। क्वासावस्यायुः प्रथितः प्रचण्डवर्म्मेति। सोऽब्रूत राज्यमिदं समेत्यपास्तशङ्को राजास्थानमण्डपएव तिष्ठत्युपास्यमानः कुशीलवैरिति। यद्येवमुद्याने तिष्ठेति तं जरन्तमादिश्य तत्प्राकारैकपार्श्वे क्वचिच्छून्यमठिकायां मात्राः समवतार्य्य तद्दृष्टशनियुक्तराजपुत्रः कृतकुशीलववेषलीलः प्रचण्डवर्म्मागामेत्यान्वरञ्जयम्। अनुरञ्जितात्मे तु समये जनसमाजोपयोगीनि संहृत्य नृत्यगीतनानारुदितादिहस्तचंक्रमणमूर्द्धमादपादापीडवृश्चिकमकरलङ्घनादीनि मत्स्योद्वर्त्तनादीनि च करणानि पुनरादायादायासन्नवर्त्तिनां क्षुरिकास्ताभिरुपहितवर्णां चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपातादीनि दर्शयन् विंशतिचापान्तरालावस्थितस्य प्रचण्डवर्म्मणः क्षुरिकयैकया प्रत्युरसं प्रहृत्य जीव्याद्दर्पसहस्रं वसन्तभानुरित्यभिगर्ज्जन् मद्भावमुत्कस्तु मुयतासेः कस्यापि चारभटस्य पीवरांसबाहुशिखरमाक्रम्य तावतैव तं विचेतो कुर्वन्नाकुलञ्च लोकमुच्चूकुर्वन् द्विपुरुषोच्छ्रितं प्राकारमत्यलङ्घयम् अवप्लुत्य चोपवने मदनुपातिनामेष पन्था दृश्यतइति ब्रुवाणएव नालीजङ्घसमीक्षितसैकतास्पृष्टपदन्यासया तमालवीथ्या चानुप्राकारं प्राचा प्रतिप्रधावितः पुनरवाचोच्छ्रितैस्तकम्पितत्वादलक्ष्यपातेन प्रहृत्य लङ्घितप्राकारवप्रखातवलयस्तस्यां शून्यमठिकायां तूर्णमेव प्रविश्य प्रतिमुक्तपूर्ववेषः सह कुमारेण मत्कर्म्मतुमुलराजदारदुःखलब्धवर्त्मा भ्रमणानेहेशमभ्यगाम्। प्रागेव तस्मिन् दुर्गागृहे प्रतिमाधिष्ठानएव मया कृतं भग्नपार्श्वस्थैर्य्यस्थूलप्रस्तरस्थगितवाह्यद्वारं बिलम्। अथ गलति मध्यरात्रे वर्षधरोपनीत-

महार्हरत्नभूषणपट्टनिवसनौ तं बिलमावां प्रविश्य तूष्णीमतिष्ठाव।

देवी तु पूर्व्वेद्युरेव यथार्हमग्निसंस्कारं बालाय दत्त्वा प्रचण्डवर्म्मणि चण्डवर्म्मणि च तामवस्थामश्मकेन्द्रोपधिकृतामेव सन्दिश्य उत्तरेद्युः प्रत्युषस्येव पूर्वसङ्केतितपौरामात्यसामन्तवृद्धैः सहाभ्येत्य भगवतीमर्च्चयित्वा सर्व्वजनप्रत्यक्षं परीक्षितकुक्षिवेजन्यं तद्भवनं विधाय दत्तदृष्टिः सह जनेन स्थित्वा पटीयांसं पटहशब्दमकारयत्। अनुगतरन्ध्रप्रविष्टेन तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपादपीठमंसलपुरुषप्रयत्नदुश्चलमुभयकरविधृतमेकपार्श्वमेकतोनिवेश्य निरगमं निरगमयञ्च कुमारम्। अथ यथापूर्व्वमर्च्चयित्वा दुर्गाम् उद्घाटितकपाटः प्रत्यक्षीभूय प्रत्ययहृष्टदृष्टिः स्फुटरोमाञ्चमुद्यताञ्जलि रूढविस्मयञ्च प्रणिपतन्तीः प्रकृतीरभ्यधाम् इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मानाज्ञापयति। मया स शापया शार्दूलरूपेण तिरस्कृत्याद्य वो दत्तः कर्म्मेनमद्य प्रभृति मत्पुत्रतयामन्दमात्मपक्षइति परिगृह्णन्तु भवन्तः। अपि च दुर्घटकूटकोटिघटनापाटवप्रकटशाठ्यनिष्ठुराश्मकघटघट्टनात्मानं मां मन्यध्वमस्य रक्षितारं रक्षानिर्व्वेशश्चास्य स्वसेयं सुभ्रूरभ्यनुज्ञाता मत्सुमार्गेणेति।

श्रुत्वैतदहो भाग्यवान् भोजवंशो यस्य त्वमार्य्यादत्तोनाथ इत्यप्रीयन्त प्रकृतयः। सा तु वाचामगोचरं हर्षावस्थामस्पृशन्मे श्वश्रूः तदहरेव च यथावदग्राहयन्मञ्जुवादिनीपाणिपल्लवम्। प्रपन्नायाञ्च यामिन्यां सम्यगेव चित्तं प्रत्यपूरयम्। अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैरभ्युपायान्तरप्रयुक्तैर्दिव्यांशतामेव मम समर्थयमानो मदाज्ञां नात्यवर्त्तत। राजपुत्रस्यार्य्यापुत्रइति प्रभावहेतुः प्रसिद्धिरासीत्। तञ्च गुणवत्यङ्कि भद्राकृतमुपनाय्य पुरोहितेन पाठयन्नीतिं राजकार्य्याण्यन्वतिष्ठम्। अचिन्तयञ्च राज्यं नाम शक्तित्रयायत्तं शक्तयश्च मन्त्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते मन्त्रेण हि विनिश्चयोऽर्थानां प्रभावेण

प्रारम्भः उत्साहेन निर्व्वहणम्। अतः पञ्चाङ्गमन्त्रमूलो द्विरूप प्रभावस्कन्धश्चतुर्गुणोत्साहविटपो द्विसप्ततिप्रकृतिपत्रः षड्गुणकिसलयः शक्तिसिद्धिपुष्पफलश्च नयवनस्पतिर्नेतुरुपकरोतु। स चायमनेकाधिकरणत्वादसहायेन दुरुपजीवः। यस्त्वयमार्य्यकेतुर्नाम मित्रवर्म्ममन्त्री स कोशलाभिजनत्वात् कुमारमातृपक्षो मन्त्रिगुणैश्च युक्तस्तन्मतिमवमत्यैव ध्वस्तो मित्रवर्म्मा सचिवोऽयं पेशलमित्यथ नालीजङ्घं रहस्यशिक्षयम्। तात आर्य्यमार्य्यकेतुमेकान्ते ब्रूहि कोऽन्वेष मायापुरुषो यदिमां राज्यलक्ष्मीमनुभवति सचायमस्मद्बालो भुजङ्गेनामुना परिगृहीतः किमुद्ध्रीर्य्येत ग्रस्येत वेति। स यद्वदिष्यति तदस्मि बोध्य इति। सोऽन्यदैवं मामावेदयत्। मुकुरपास्य प्राश्नैः प्रवर्त्य चित्राः कथाः संवाह्य पाणिपादमतिविश्रम्भदत्तच्छायं तमप्राक्षं त्वदुपदिष्टेन नयेन। सोऽप्येवमकथयत् भद्र मैवं वादीरभिजनस्य शुद्धिदर्शनमसाधारणं बुद्धिनैपुणमतिमानुषं प्राणबलमपरिमाणमौदार्य्यमत्याश्चर्य्यमस्त्रकौशलमनल्पं शिल्पज्ञानमनुग्रहार्द्रं चेतस्तेजश्चाप्यपरविषह्यमभ्यमित्रीणमित्यस्मिन्नेव सन्निपातिता गुणा येऽन्यत्रैकैकशोऽपि दुर्लभाः। ध्रियतामेष चिरविल्वद्रुमः प्रज्ञानान्तु चन्दनतरुस्तमुद्धृत्य नीतिघ्नमन्यमभ्रकमिमञ्च राजपुत्रं पित्र्ये पदे प्रतिष्ठितमेव विद्धि नात्र संशयः कार्य्य इति। तथापि श्रुत्वा भूयो भूयश्चोपधाभिर्विशोध्य तं मे मतिसहायमकरवम् तत्सखञ्च सत्यशौचयुक्तानमात्यान्विविधव्यञ्जनांश्च गूढपुरुषानुदपादयम्। तेभ्यश्चोपलभ्य लुब्धसमृद्धमत्युत्सिक्तमविधेयप्रायञ्च प्रकृतिमण्डलमलुब्धतामभिविख्यापयन् धार्म्मिकत्वमुद्भावयन्नास्तिकान् कदर्थयन् कण्टकान् विशोधयन् अमित्रोपधीरपघ्नन् चातुर्वर्ण्यञ्च स्वधर्म्मकर्म्मसु स्थापयन् अभिसमाहरेयमर्थान् अर्थमूला हि दण्डविशिष्टकर्म्मारम्भाः नचान्यदस्ति पापिष्ठं तत्र दौर्बल्यादित्याकलय्य योगानन्वतिष्ठम्।

इति दण्डिनः कृतौ दशकुमारचरिते विश्रुतचरितं नाम अष्टम उच्छ्वासः।